नकारणोत्पन्नस्य य एव वर्त्तमानसमयस्योत्पादः स एवातीतसमयापेक्षया विनाशस्तदुभयाधारकालाणुद्रव्यत्वेन ध्रौव्यमित्युत्पादव्ययध्रौव्यात्मककालद्रव्यसिद्धिः। लोकबहिर्भागे कालाणुद्रव्याभावात्कथमाकाशद्रव्यस्य परिणतिरिति चेत्; अखण्डद्रव्यत्वादेकदेशदण्डाहतकुम्भकारचक्रभ्रमणवत्, तथैवैकदेशमनोहरस्पर्शनेन्द्रियविषयानुभवसर्वाङ्गसुखवत्, लोकमध्यस्थितकालाणुद्रव्यधारणैकदेशेनापि सर्वत्र परिणमनं भवतीति. कालद्रव्यं शेषद्रव्याणां परिणतेः सहकारिकारणं भवति। कालद्रव्यस्य किं सहकारिकारणमिति। यथाकाशद्रव्याणामाधारः स्वस्यापि, तथा कालद्रव्यमपि परेषां परिणतिसहकारिकारणं स्वस्यापि। अथ मतं यथा कालद्रव्यं स्वस्योपादानकारणं परिणतेः सहकारिकारणं च भवति तथा सर्वद्रव्याणि कालद्रव्येण किं प्रयोजनमिति। नैवम्। यदि पृथग्भूतसहकारिकारणेन प्रयोजनं नास्ति तर्हि सर्वद्रव्याणां साधारणगतिस्थित्यवगाहनविषये धर्माधर्माकाशद्रव्यैरपि सहकारिकारणभूतैः प्रयोजनं नास्ति। किञ्च कालस्य घटिकादिवसादिकार्यं प्रत्यक्षेण दृश्यते धर्मादीनां पुनरागमकथनमेव प्रत्यक्षेण किमपि कार्यं न दृश्यते। ततस्तेषामपि कालद्रव्यस्येवाभावः प्राप्नोति। ततश्च जीवपुद्गलद्रव्यद्वयमेव। स चागमविरोधः। किञ्च सर्वद्रव्याणां परिणतिसहकारित्वं कालस्यैव गुणः, घ्राणेन्द्रियस्य रसास्वादनमिवान्यद्रव्यस्य गुणोऽन्यद्रव्यस्य कर्त्तुं नायाति द्रव्यसंकरदोषप्रसंगादिति। कश्चिदाह—यावत्कालेनैका-

---

विद्यमान दंडकी प्रेरणासे संपूर्ण कुंभकारके चाकका परिभ्रमण हो जाता है, उस तरहसे अथवा जैसे एक देशमें प्रिय ऐसे स्पर्शन इन्द्रियके विषयका अनुभव करनेसे समस्त शरीरमें सुखका अनुभव होता है उस प्रकार लोकके मध्यमें स्थित जो कालाणु द्रव्यको धारण करनेवाला एकदेश आकाश है उससे भी सर्व आकाशमें परिणमन होता है। शंका—जैसे कालद्रव्य, जीव पुद्गल आदि द्रव्योंके परिणमनमें सहकारी कारण है वैसे ही कालद्रव्यके परिणमनमें सहकारी कारण कौन है? उत्तर—जैसे आकाश द्रव्य संपूर्ण द्रव्योंका आधार है और अपना आधार भी आप ही है, इसी प्रकार काल द्रव्य भी अन्य सब द्रव्योंके परिणमनमें और अपने परिणमनमें भी सहकारी कारण है। अब कदाचित् कहो कि जैसे कालद्रव्य अपना तो उपादान कारण है और परिणमनका सहकारी कारण है, वैसे ही जीव आदि सब द्रव्योंको अपने उपादान कारण और परिणतिके सहकारी कारण मानो। उन जीव आदिके परिणमनमें कालद्रव्यसे क्या प्रयोजन है? समाधान—ऐसा नहीं। क्योंकि यदि अपनेसे भिन्न बहिरंग सहकारी कारणसे प्रयोजन नहीं है तो सब द्रव्योंमें साधारण रूप (समानता)-से विद्यमान जो गति, स्थिति तथा अवगाहन हैं उनके विषयमें सहकारी कारणभूत जो धर्म, अधर्म तथा आकाश द्रव्य हैं उनसे भी कोई प्रयोजन नहीं है। और भी, कालका तो घटिका (घड़ी) दिन आदि कार्य प्रत्यक्षसे देख पड़ता है और धर्म द्रव्य आदिका कार्य तो केवल आगम (शास्त्र) के कथनसे ही माना जाता है; उनका कोई कार्य प्रत्यक्षसे नहीं दीख पड़ता। इसलिये, जैसे कालद्रव्यका अभाव मानते हो उसी प्रकार उन धर्म, अधर्म

काशप्रदेशं परमाणुरतिक्रामति ततस्तावत्कालेन समयो भवतीत्युक्तमागमे एकसमयेन चतुर्दशरज्जुगमने यावंत आकाशप्रदेशास्तावन्तः समया प्राप्नुवन्ति । परिहारमाह— एकाकाशप्रदेशातिक्रमेण यत्समयव्याख्यानं कृतं तन्मन्दगत्यपेक्षया, यत्पुनरेकसमये चतुर्दशरज्जुगमनव्याख्यानं तत्पुनः शीघ्रगत्यपेक्षया। तेन कारणेन चतुर्दशरज्जुगमनेऽप्येकसमयः। तत्र दृष्टान्तः—कोऽपि देवदत्तो योजनशतं मन्दगत्या दिनशतेन गच्छति। स एव विद्याप्रभावेण शीघ्रगत्या दिनेनैकेनापि गच्छति तत्र किं दिनशतं भवति। किन्त्वेक एव दिवसः। तथा चतुर्दशरज्जुगमनेऽपि शीघ्रगमनेनैक एव समयः। किञ्च स्वयं विषयानुभवरहितोऽप्ययं जीवः परकीयविषयानुभवं दृष्टं श्रुतं च मनसि स्मृत्वा यद्विषयाभिलाषं करोति तदपध्यानं भण्यते तत्प्रभृतिसमस्तविकल्पजालरहितं स्वसंवित्तिसमुत्पन्नसहजानन्दैकलक्षणसुखरसास्वादसहितं यत्तद्वीतरागचारित्रं भवति। यत्पुनस्तदविनाभूतं तन्निश्चयसम्यक्त्वं चेति भण्यते। तदेव कालत्रयेपि मुक्तिकारणम्। कालस्तु तदभावे सहकारिकारणमपि न भवति ततः स हेय इति। तथाचोक्तं "किं पल्लविएण बहुणा जे सिद्धा णरवरा गए काले। सिज्झिहंहि जेवि भविया तं जाणइ सम्ममाहप्पं॥" इदमत्र

---

तथा आकाश द्रव्योंका भी अभाव अवश्य प्राप्त होता है। और जब इन काल आदि चारोंका अभाव मानलोगे तो जीव तथा पुद्गल ये दो ही द्रव्य रह जायँगे। और दो द्रव्योंके माननेपर आगमसे विरोध होगा। और सब द्रव्योंके परिणमनमें सहकारी होना यह केवल काल द्रव्यका ही गुण है। जैसे घ्राण इंद्रिय ( नासिका ) से रसका आस्वाद नहीं हो सकता, ऐसे ही अन्य द्रव्यका गुण भी अन्य द्रव्यके करनेमें नहीं आता। क्योंकि ऐसा माननेसे द्रव्यसंकर दोषका प्रसंग होगा ( अर्थात् अन्य द्रव्यका लक्षण अन्य द्रव्यमें चला जायगा, जो कि सर्वथा अनुचित है )। अब यहां कोई कहता है कि जितने कालमें एक आकाशके प्रदेशको परमाणु अतिक्रम करता है अर्थात् एक प्रदेशसे दूसरे प्रदेशमें गमन करता है उतने कालका नाम समय होता है यह शास्त्रमें कहा है, और इस हिसाबसे चौदह रज्जु गमन करनेमें जितने आकाशके प्रदेश हैं उतने समय ही लगने चाहिये; परन्तु शास्त्रमें यह भी कहा है कि पुद्गल परमाणु एक समयमें चौदह रज्जु पर्यन्त गमन करता है सो यह कथन कैसे संभव हो सकता है? इसका खंडन कहते हैं कि आगममें जो परमाणुका एक समयमें एक आकाशके प्रदेशमें गमन करना कहा है सो तो मन्द गमनकी अपेक्षासे है, और जो परमाणुका एक समयमें चौदह रज्जुका गमन कहा है वह शीघ्र गमनकी अपेक्षासे है, इस कारण परमाणुको शीघ्रगतिसे चौदह रज्जु प्रमाण गमन करनेमें भी एकही समय लगता है। इस विषयमें दृष्टान्त यह है कि जैसे जो देवदत्त मन्द गमन (धीरी चाल) से सौ योजन सौ दिनमें जाता है, वही देवदत्त विद्याके प्रभावसे शीघ्र गमन आदि करके १०० सौ योजन एक दिनमें भी जाता है तो क्या उस देवदत्तको शीघ्रगतिसे सौ योजन गमन करनेमें सौ दिन लगेंगे? किन्तु एक ही दिन लगेगा। इसी प्रकार शीघ्र गतिसे चौदह रज्जु

तात्पर्यं—कालद्रव्यमन्यद्वा परमागमाविरोधेन विचारणीयं परं किन्तु वीतरागसर्वज्ञवचनं प्रमाणमिति मनसि निश्चित्य विवादो न कर्त्तव्यः। कस्मादिति चेत्—विवादे रागद्वेषौ भवतस्ततश्च संसारवृद्धिरिति ॥२२॥

एवं कालद्रव्यव्याख्यानमुख्यतया पंचमस्थले सूत्रद्वयं गतम्। इत्यष्टगाथासमुदायेन पंचभिः स्थलैरजीवद्रव्यव्याख्यानेन द्वितीयांतराधिकारः समाप्तः॥

अतःपरं सूत्रपञ्चकपर्यन्तं पञ्चास्तिकायव्याख्यानं करोति। तत्रादौ गाथापूर्वार्द्धेन षड्द्रव्यव्याख्यानोपसंहार उत्तरार्धेन तु पञ्चास्तिकायव्याख्यानप्रारम्भः कथ्यते;—

एवं छब्भेयमिदं जीवाजीवप्पभेददो दव्वं।
उत्तं कालविजुत्तं णादव्वा पंच अत्थिकाया दु ॥२३॥

व्याख्या—"एवं छब्भेयमिदं जीवाजीवप्पभेददो दव्वं उत्तं" एवं पूर्वोक्तप्रकारेण षड्भेदमिदं जीवाजीवप्रभेदतः सकाशाद्द्रव्यमुक्तं कथितं प्रतिपादितम्। "कालविजुत्तं

---

गमन करनेमें भी परमाणुको एक ही समय लगता है। और भी यहां विशेष जानने योग्य है कि यह जीव स्वयं (निज स्वभावसे) विषयोंके अनुभवसे रहित है तथापि अन्यके देखे हुए अथवा सुने हुए विषयके अनुभवको मनमें स्मरण करके जो विषयोंकी इच्छा करता है उसको अपध्यान (बुरा ध्यान) कहते हैं। उस विषयकी अभिलाषाको आदि ले, संपूर्ण विकल्पोंका जो समूह है उससे रहित और आत्मज्ञानसे उत्पन्न स्वाभाविक आनंदरूप सुखके रसके आस्वादसे सहित जो है वह वीतराग चारित्र है। और जो उस वीतराग चारित्रसे व्याप्त है वह निश्चय सम्यक्त्व तथा वीतराग सम्यक्त्व कहलाता है। वह निश्चय सम्यक्त्व ही भूत, भविष्यत्, वर्त्तमान इन तीनों कालोंमें मुक्तिका कारण है। और काल तो उस निश्चय सम्यक्त्वके अभावमें सहकारी कारण भी नहीं होता है, इस कारण वह कालद्रव्य हेय (त्याग करने योग्य) है। सो ही कहा है कि "बहुत कथनसे क्या प्रयोजन है? जो श्रेष्ठ मनुष्य भूत कालमें सिद्ध हुए हैं तथा अब होंगे, वह सब सम्यक्त्वका माहात्म्य है"। अब यहां तात्पर्य यह है कि कालद्रव्यके तथा अन्य द्रव्योंके विषयमें जो कुछ विचारना हो वह सब परम आगमके अविरोधसे ही विचारना चाहिये और "वीतराग सर्वज्ञका वचन प्रमाण है" ऐसा मनमें निश्चय करके उनके कथनमें विवाद नहीं करना चाहिये। क्योंकि विवादमें राग तथा द्वेष उत्पन्न होते हैं और उन रागद्वेषोंसे संसारकी वृद्धि होती है ॥२२॥

ऐसे कालद्रव्यके व्याख्यानकी मुख्यतासे पंचम स्थलमें दो सूत्र समाप्त हुए। और उक्त रीतिसे आठ गाथाओंके समुदायसे पांच स्थलोंसे पुद्गल आदि पांच प्रकारके अजीव द्रव्यके निरूपण रूपसे दूसरा अन्तर अधिकार समाप्त हुआ॥

अब इसके पश्चात् पांच सूत्र पर्यन्त पंचास्तिकायका व्याख्यान करते हैं। और उनमें भी प्रथम गाथाके पूर्वार्धसे छहों द्रव्योंके व्याख्यानका उपसंहार और उत्तरार्धसे पंचास्तिकायके व्याख्यानका आरम्भ करते हैं;—

णादव्वा पंच अत्थिकाया दु" तदेव षड्विधं द्रव्यं कालेन वियुक्तं रहितं ज्ञातव्याः पञ्चास्तिकायास्तु पुनरिति ॥ २३ ॥

पञ्चेति संख्या ज्ञाता तावदिदानीमस्तित्वं कायत्वं च निरूपयति;—

संति जदो तेणेदे अत्थित्ति भणंति जिणवरा जह्मा ।
काया इव वहुदेसा तह्मा काया य अत्थिकाया य ॥२४॥

व्याख्या—"संति जदो तेणेदे अत्थित्ति भणंति जिणवरा" सन्ति विद्यन्ते यत एते जीवाद्याकाशपर्यन्ताः पञ्च तेन कारणेनैतेऽस्तीति भणन्ति जिणवराः सर्वज्ञाः । "जह्मा काया इव वहुदेसा तह्मा काया य" यस्मात्काया इव बहुप्रदेशास्तस्मात्कारणात्कायाश्च भणंति जिनवराः । "अत्थिकाया य" एवं न केवलं पूर्वोक्तप्रकारेणास्तित्वेन युक्ता अस्ति-संज्ञास्तथैव कायत्वेन युक्ताः कायसंज्ञा भवन्ति किन्तूभयमेलापकेनास्तिकायसंज्ञाश्च

---

गाथाभावार्थः—इस प्रकार एक जीव द्रव्य और पांच अजीव द्रव्य ऐसे छह प्रकारके द्रव्यका निरूपण किया। इन छहों द्रव्योंमेंसे एक कालके विना शेष पांच अस्तिकाय जानने चाहिये ॥२३॥

व्याख्यार्थः—"एवं छब्भेयमिदं जीवाजीवप्पभेददो दव्वं उत्तं" ऐसे पूर्वोक्त प्रकारसे जीव तथा अजीवके भेदसे यह द्रव्य छह प्रकारका कहा गया। "कालविजुत्तं णादव्वा पंच अत्थिकाया दु" और कालरहित वही छह प्रकारका द्रव्य अर्थात् कालके विना शेष पांच द्रव्योंको पांच अस्तिकाय समझना चाहिये ॥२३॥

अब अस्तिकायसंबन्धिनी पांच यह संख्या तो जानी हुई है ही, इसलिये अस्तित्व तथा कायत्वका निरूपण करते हैं;—

गाथाभावार्थः—पूर्वोक्त जीव, पुद्गल, धर्म, अधर्म तथा आकाश ये पांचों द्रव्य विद्यमान हैं इसलिये जिनेश्वर इनको 'अस्ति' (है) ऐसा कहते हैं और ये कायके समान बहु प्रदेशोंको धारक करते हैं इसलिये इनको 'काय' कहते हैं। अस्ति तथा काय दोनोंको मिलानेसे ये पांचों 'अस्तिकाय' होते हैं ॥२४॥

व्याख्यार्थः—"संति जदो तेणेदे अत्थित्ति भणंति जिणवरा" जीवसे आदि लेके आकाश पर्यन्त ये पूर्वोक्त पांच द्रव्य विद्यमान हैं इसलिये सर्वज्ञ देव इनको "अस्ति" (है) ऐसा कहते हैं। "जह्मा काया इव वहुदेसा तह्मा काया य" और काय अर्थात् शरीरके सदृश ये बहुत प्रदेशोंके धारक हैं इस कारणसे जिनेश्वर इनको 'काय' कहते हैं। "अत्थिकाया य" पूर्वोक्त प्रकार अस्तित्वसे युक्त ये पांचों केवल अस्तिसंज्ञक ही नहीं हैं, तथा कायत्वसे युक्त केवल काय संज्ञाके धारक ही नहीं हैं; किन्तु अस्ति और काय इन दोनोंको मिलानेसे "अस्तिकाय" संज्ञाके धारक होते हैं। अब इन पांचोंके संज्ञा, लक्षण तथा प्रयोजन आदिसे यद्यपि परस्पर भेद है तथापि अस्तित्वके साथ अभेद है यह दर्शाते

भवन्ति ॥ इदानीं संज्ञालक्षणप्रयोजनादिभेदेऽप्यस्तित्वेन सहाभेदं दर्शयति । तथाहि-शुद्धजीवास्तिकाये सिद्धत्वलक्षणः शुद्धद्रव्यव्यञ्जनपर्यायः, केवलज्ञानादयो विशेषगुणाः अस्तित्ववस्तुत्वागुरुलघुत्वादयः सामान्यगुणाश्च । तथैवाव्याबाधानन्तसुखाद्यनन्तगुण-व्यक्तिरूपस्य कार्यसमयसारस्योत्पादो रागादिविभावरहितपरमस्वास्थ्यरूपस्य कारणस-मयसारस्य व्ययस्तदुभयाधारभूतपरमात्मद्रव्यत्वेन ध्रौव्यमित्युक्तलक्षणैर्गुणपर्यायैरुत्पाद-व्ययध्रौव्यैश्च सह मुक्तावस्थायां संज्ञालक्षणप्रयोजनादिभेदेऽपि सत्तारूपेण प्रदेशरूपेण च भेदो नास्ति । कस्मादिति चेत्-मुक्तात्मसत्तायां गुणपर्यायाणामुत्पादव्ययध्रौव्याणां चास्तित्वं सिद्ध्यति, गुणपर्यायोत्पादव्ययध्रौव्यसत्तायाश्च मुक्तात्मास्तित्वं सिद्ध्यतीति परस्परसाधितसिद्धत्वादिति । कायत्वं कथ्यते-बहुप्रदेशप्रचयं दृष्ट्वा यथा शरीरं कायो भण्यते तथानन्तज्ञानादिगुणाधारभूतानां लोकाकाशप्रमितासंख्येयशुद्धप्रदेशानां प्रचयं समूहं संघातं मेलापकं दृष्ट्वा मुक्तात्मनि कायत्वं भण्यते । यथा शुद्धगुणपर्यायोत्पादव्य-यध्रौव्यैः सह मुक्तात्मनः सत्तारूपेण निश्चयेनाभेदो दर्शितस्तथा यथासंभवं संसारिजीवेषु पुद्गलधर्माधर्माकाशकालेषु च द्रष्टव्यः । कालद्रव्यं विहाय कायत्वं चेति सूत्रार्थः ॥२४॥

---

हैं:—जैसे शुद्ध जीवास्तिकायमें सिद्धत्व लक्षण शुद्ध द्रव्य व्यञ्जन पर्याय है, केवल ज्ञान आदि विशेष गुण हैं, तथा अस्तित्व, वस्तुत्व और अगुरुलघुत्व आदि सामान्य गुण हैं, और जैसे मुक्तिदशामें अव्याबाध अर्थात् बाधारहित अनन्त सुख आदि अनन्त गुणोंकी व्यक्ति ( प्रकटता ) रूप कार्यसमयसारका उत्पाद, राग आदि विभावोंसे शून्य परम स्वास्थ्य स्वरूप कारणसमयसारका व्यय ( नाश ), और इन दोनोंके अर्थात् उत्पाद तथा व्ययके आधारभूत परमात्मारूप जो द्रव्य है उस रूपसे ध्रौव्य ( स्थिरत्व ) है। इस प्रकार पूर्व-कथित लक्षणयुक्त गुण तथा पर्यायोंसे और उत्पाद, व्यय तथा ध्रौव्यके साथ मुक्त अवस्थामें संज्ञा, लक्षण तथा प्रयोजन आदिका भेद होनेपर भी सत्तारूपसे और प्रदेशरूपसे किसीका किसीके साथ भेद नहीं है। क्योंकि, जीवोंकी मुक्तिअवस्थामें गुण, द्रव्य तथा पर्यायोंकी और उत्पाद, व्यय तथा ध्रौव्यरूप लक्षणोंकी विद्यमानता ( सत्ता ) सिद्ध होती है और गुण, पर्याय, उत्पाद, व्यय तथा ध्रौव्यकी सत्ताके अस्तित्वको मुक्त आत्मा जो है वह सिद्ध करता है। इस प्रकार गुण, पर्याय आदि मुक्त आत्माकी और मुक्त आत्मा गुण पर्यायकी सत्ताको परस्पर सिद्ध करते हैं। अब इनके कायत्वका निरूपण करते हैं.-बहु-तसे प्रदेशोंमें व्याप्त होके स्थितिको देखके जैसे शरीरको कायत्व कहते हैं अर्थात् जैसे शरीरमें अधिक प्रदेश होनेसे शरीरको काय कहते हैं; उसी प्रकार अनंत ज्ञान आदि गुणोंके आधारभूत जो लोकाकाशके प्रमाण असंख्यात शुद्ध प्रदेश हैं उनके समूह, संघात अथवा मेलको देखके, मुक्त जीवमें भी कायत्वका व्यवहार अथवा कथन होता है। जैसे शुद्ध गुण, पर्यायोंसे तथा उत्पाद, व्यय और ध्रौव्य लक्षणसे सहित रहनेवाले मुक्त आत्माके निश्चय नयसे सत्तारूपसे अभेद दर्शाया गया है, ऐसे ही संसारी जीवोंमें तथा पुद्गल,

अथ कायत्वव्याख्याने पूर्वं यत्प्रदेशास्तित्वं सूचितं तस्य विशेषव्याख्यानं करोतीत्येका पातनिका, द्वितीया तु कस्य द्रव्यस्य कियन्तः प्रदेशा भवन्तीति प्रतिपादयति;—

होंति असंखा जीवे धम्माधम्मे अणंत आयासे।
मुत्ते तिविह पदेसा कालस्सेगो ण तेण सो काओ ॥२५॥

व्याख्या—"होंति असंखा जीवे धम्माधम्मे" भवन्ति लोकाकाशप्रमितासंख्येय-प्रदेशाः प्रदीपवदुपसंहारविस्तारयुक्तेऽप्येकजीवे नित्यं स्वभावविस्तीर्णयोर्धर्माधर्मयोरपि। "अणंत आयासे" अनन्तप्रदेशा आकाशे भवन्ति। "मुत्ते तिविह पदेसा" मूर्त्ते पुद्गल-द्रव्ये संख्यातासंख्यातानन्ताणूनां पिण्डाः स्कन्धास्त एव त्रिविधाः प्रदेशा भण्यन्ते न च क्षेत्रप्रदेशाः। कस्मात् ? पुद्गलस्यानन्तप्रदेशक्षेत्रेऽवस्थानाभावादिति। "कालस्सेगो" कालाणुद्रव्यस्यैक एव प्रदेशः। "ण तेण सो काओ" तेन कारणेन स कायो न भवति। कायस्यैकप्रदेशत्वविषये युक्तिं प्रदर्शयति। तद्यथा—किञ्चिदूनचरमशरीरप्रमाणस्य सिद्ध-त्वपर्यायस्योपादानकारणभूतं शुद्धात्मद्रव्यं तत्पर्यायप्रमाणमेव। यथा वा मनुष्यदेवादि-पर्यायोपादानकारणभूतं संसारिजीवद्रव्यं तत्पर्यायप्रमाणमेव, तथा कालद्रव्यमपि सम-यरूपस्य कालपर्यायस्य विभागेनोपादानकारणभूतमविभाग्येकप्रदेश एव भवति। अथवा

---

धर्म, अधर्म, आकाश और काल द्रव्योंमें भी यथासंभव परस्पर अभेद देख लेना चाहिये। और कालद्रव्यको छोड़के अन्य सब द्रव्योंके कायत्व रूपसे भी अभेद है। इस प्रकार सूत्रका अर्थ है ॥२४॥

अब कायत्वके व्याख्यानमें जो पहले प्रदेशोंका अस्तित्व सूचन किया है उसका विशेष व्याख्यान करते हैं यह तो अग्रिम गाथाकी एक भूमिका है, और किस द्रव्यके कितने प्रदेश हैं यह दूसरी भूमिका प्रतिपादन करती है;—

गाथाभावार्थः—जीव, धर्म तथा अधर्म द्रव्यमें असंख्यात प्रदेश हैं और आकाशमें अनन्त हैं। मूर्त्त ( पुद्गल ) में संख्यात, असंख्यात तथा अनन्त प्रदेश हैं और कालके एक ही प्रदेश है इसलिये काल काय नहीं है ॥२५॥

व्याख्यार्थः—"होंति असंखा जीवे धम्माधम्मे" प्रदीपके समान संकोच तथा विस्तारसे युक्त एक जीवमें भी और सदा स्वभावसे विस्तारको प्राप्त हुए धर्म तथा अधर्म इन दोनों द्रव्योंमें भी लोकाकाशके प्रमाण असंख्यात प्रदेश होते हैं। "अणंत आयासे" आकाशमें अनन्त प्रदेश होते हैं। "मुत्ते तिविह पदेसा" मूर्त्त अर्थात् पुद्गल द्रव्यमें जो संख्यात, असंख्यात तथा अनन्त परमाणुओंके पिण्ड अर्थात् स्कन्ध हैं वे ही तीन प्रकारके प्रदेश कहे जाते हैं, न कि क्षेत्ररूप प्रदेश तीन प्रकारके हैं। क्योंकि पुद्गलके अनन्त प्रदेश क्षेत्रमें स्थितिका अभाव है। "कालस्सेगो" कालद्रव्यका एक ही प्रदेश है। "ण तेण सो काओ" इसी हेतुसे अर्थात् एक प्रदेशी होनेसे वह कालद्रव्य काय नहीं है। अब कालके

मन्दगत्या गच्छतः पुद्गलपरमाणोरेकाकाशप्रदेशपर्यन्तमेव कालद्रव्यं गतेः सहकारिकारणं भवति ततो ज्ञायते तदप्येकप्रदेशमेव। कश्चिदाह—पुद्गलपरमाणोर्गतिसहकारिकारणं धर्मद्रव्यं तिष्ठति, कालस्य किमायातम्। नैवं वक्तव्यं—धर्मद्रव्ये गतिसहकारिकारणे विद्यमानेऽपि मत्स्यानां जलवन्मनुष्याणां शकटारोहणादिवत्सहकारिकारणानि बहून्यपि भवन्तीति। अथ मतं कालद्रव्यं पुद्गलानां गतिसहकारिकारणं कुत्र भणितमास्ते? तदुच्यते। "पुग्गलकरणा जीवा खंधा खलु कालकरणादु" इत्युक्तं श्रीकुन्दकुन्दाचार्यदेवैः पञ्चास्तिकायप्राभृते। अस्यार्थः कथ्यते। धर्मद्रव्ये विद्यमानेऽपि जीवानां कर्मनोकर्मपुद्गला गतेः सहकारिकारणं भवन्ति, अणुस्कन्धभेदभिन्नपुद्गलानां तु कालद्रव्यमित्यर्थः॥२५॥

अथैकप्रदेशस्यापि पुद्गलपरमाणोरुपचारेण कायत्वमुपदिशति;—

एयपदेसो वि अणू णाणाखंधप्पदेसदो होदि।
बहुदेसो उवयारा तेण य काओ भणंति सव्वण्हु ॥२६॥

---

एक प्रदेशी होनेमें युक्ति कहते हैं। जैसे—अन्तिम शरीरसे किंचित् न्यून प्रमाणके धारक सिद्धत्व पर्यायका उपादान कारणभूत जो शुद्ध आत्मा द्रव्य है वह सिद्धत्व पर्यायके प्रमाण ही है। अथवा जैसे मनुष्य, देव आदि पर्यायोंका उपादान कारणभूत जो संसारी जीव द्रव्य है वह उस मनुष्य, देव आदि पर्यायके प्रमाण ही है, उसी प्रकार कालद्रव्य भी समयरूप जो कालका पर्याय है उसका विभागसे उपादान कारण है तथा अविभागसे एक प्रदेश ही होता है। अथवा मन्द गतिसे गमन करते हुये पुद्गल परमाणुके एक आकाशके प्रदेश पर्यन्त ही कालद्रव्य गतिका सहकारी कारण होता है, इस कारण जाना जाता है कि वह काल द्रव्य भी एक ही प्रदेशका धारक है। अब यहां कोई कहता है कि पुद्गल—परमाणुकी गतिमें सहकारी कारण तो धर्म द्रव्य विद्यमान है ही, इसमें कालद्रव्यका क्या प्रयोजन है? सो ऐसा नहीं कह सकते। क्योंकि धर्म द्रव्यके विद्यमान रहते भी मत्स्योंकी गतिमें जलके समान तथा मनुष्योंकी गतिमें गाड़ीपर बैठना आदिके समान पुद्गलकी गतिमें बहुतसे भी सहकारी कारण होते हैं। अब कदाचित् कहो कि "काउद्रव्य पुद्गलोंकी गतिमें सहकारी कारण है" यह कहां कहा हुआ है? सो कहते हैं। श्रीकुन्दकुन्द आचार्य देवने पंचास्तिकाय नामक प्राभृतमें "पुग्गलकरणा जीवा खंधा खलु कालकरणादु" ऐसा कहा है। इसका अर्थ कहते हैं कि धर्म द्रव्यके विद्यमान होते भी जीवोंकी गतिमें कर्म, नोकर्म पुद्गल सहकारी कारण होते हैं और अणु तथा स्कन्ध इन भेदोंसे भेदको प्राप्त हुए पुद्गलोंके गमनमें काउद्रव्य सहकारी कारण होता है। यह गाथाका अर्थ है ॥२५॥

अब पुद्गल परमाणु यद्यपि एकप्रदेशी है तथापि उपचारसे उसको काय कहते हैं ऐसा उपदेश करते हैं;—

व्याख्या—"एयपदेसो वि अणू णाणाखंधप्पदेसदो होदि बहुदेसो" एकप्रदेशोऽपि पुद्गलपरमाणुर्नानास्कन्धरूपबहुप्रदेशतः सकाशाद्बहुप्रदेशो भवति। "उवयारा" उपचाराद् व्यवहारनयात् "तेण य काओ भणंति सव्वण्हु" तेन कारणेन कायमिति सर्वज्ञा भणन्तीति। तथाहि—यथायं परमात्मा शुद्धनिश्चयनयेन द्रव्यरूपेण शुद्धस्तथैकोऽप्यनादिकर्मबन्धवशात्स्निग्धरूक्षस्थानीयरागद्वेषाभ्यां परिणम्य नरनारकादिविभावपर्यायरूपेण व्यवहारेण बहुविधो भवति। तथा पुद्गलपरमाणुरपि स्वभावेनैकोऽपि शुद्धोऽपि रागद्वेषस्थानीयबन्धयोग्यस्निग्धरूक्षगुणाभ्यां परिणम्य द्व्यणुकादिस्कन्धरूपविभावपर्यायैर्बहुविधो बहुप्रदेशो भवति तेन कारणेन बहुप्रदेशलक्षणकायत्वकारणत्वादुपचारेण कायो भण्यते। अथ मतं—यथा—पुद्गलपरमाणोर्द्रव्यरूपेणैकस्यापि द्व्यणुकादिस्कन्धपर्यायरूपेण बहुप्रदेशरूपं कायत्वं जातं तथा कालाणोरपि द्रव्येणैकस्यापि पर्यायेण कायत्वं भवतीति। तत्र परिहारः—स्निग्धरूक्षहेतुकस्य बन्धस्याभावान्न भवति। तदपि कस्मात्। स्निग्धरूक्षत्वं पुद्गलस्यैव धर्मो यतः कारणादिति। अणुत्वं पुद्गलसंज्ञा, कालस्याणुसंज्ञा

---

गाथाभावार्थः—एक प्रदेशका धारक भी परमाणु अनेक स्कन्धरूप बहुत प्रदेशोंसे बहुप्रदेशी होता है इस कारण सर्वज्ञ देव उपचारसे पुद्गल परमाणुको काय कहते हैं॥२६॥

व्याख्यार्थः—"एयपदेसो वि अणू णाणाखंधप्पदेसदो होदि बहुदेसो" यद्यपि पुद्गल परमाणु एकप्रदेशी है तथापि नानाप्रकारके द्व्यणुक आदि स्कन्धरूप बहुत प्रदेशोंके कारण बहुप्रदेशी होता है। "उवयारा" उपचार अर्थात् व्यवहार नयसे। "तेण य काओ भणंति सव्वण्हु" इसी हेतुसे सर्वज्ञ जिन देव उसको (पुद्गल परमाणुको) काय कहते हैं। सो ही पुष्ट करते हैं कि जैसे यह परमात्मा शुद्ध निश्चयनयसे द्रव्यरूपसे शुद्ध तथा एक है तथापि अनादिकर्मबन्धनके वशसे स्निग्ध तथा रूक्ष गुणोंके स्थानापन्न (एवज) जो राग और द्वेष हैं उनसे परिणामको प्राप्त होकर, व्यवहारनयके द्वारा मनुष्य, नारक आदि विभाव पर्यायरूपसे अनेक प्रकारका होता है; ऐसे ही पुद्गल परमाणु भी यद्यपि स्वभावसे एक और शुद्ध है तथापि राग द्वेषके स्थानभूत जो बंधके योग्य स्निग्ध, रूक्ष गुण हैं उनसे परिणमनको प्राप्त होके द्व्यणुक आदि स्कन्धरूप जो विभाव पर्याय हैं उनसे अनेक प्रदेशोंका धारक होता है। इसी हेतुसे बहुप्रदेशतारूप कायत्वके कारणसे पुद्गल परमाणुको सर्वज्ञ देव उपचारसे काय कहते हैं। अब यहांपर यदि ऐसा किसीका मत हो कि जैसे द्रव्यरूपसे एक भी पुद्गल परमाणुके द्व्यणुक आदि स्कन्ध पर्यायरूपसे बहुप्रदेशरूप कायत्व सिद्ध हुआ है ऐसे ही द्रव्यरूपसे एक होनेपर भी कालाणुके समय, घटिका आदि पर्यायोंसे कायत्व सिद्ध होता है। इस शंकाका परिहार करते हैं कि स्निग्ध रूक्ष गुण हैं कारण जिसमें ऐसे बंधका कालद्रव्यमें अभाव है इस कारण वह काय नहीं हो सकता। सो भी क्यों?। कि स्निग्ध तथा रूक्षपना जो है सो पुद्गलका ही धर्म है इसलिये कालमें स्निग्ध रूक्षत्व हैं नहीं और उनके विना बंध नहीं होता और बंधके विना कालमें

कथमिति चेत् तत्रोत्तरम्—अणुशब्देन व्यवहारेण पुद्गला उच्यन्ते, निश्चयेन तु वर्णादिगुणानां पूरणगलनयोगात्पुद्गला इति वस्तुवृत्त्या पुनरणुशब्दः सूक्ष्मवाचकः। तद्यथा-परमेण प्रकर्षेणाणुः। अणु कोऽर्थः सूक्ष्म इति व्युत्पत्त्या परमाणुः। स च सूक्ष्मवाचकोऽणुशब्दो निर्विभागपुद्गलविवक्षायां पुद्गलाणुं वदति। अविभागिकालद्रव्यविवक्षायां तु कालाणुं कथयतीत्यर्थः ॥२६॥

अथ प्रदेशलक्षणमुपलक्षयति;—

जावदियं आयासं अविभागीपुग्गलाणुउट्टद्धं ।
तं खु पदेसं जाणे सव्वाणुट्ठाणदाणरिहं ॥२७॥

व्याख्या—"जावदियं आयासं अविभागीपुग्गलाणुउट्टद्धं तं खु पदेसं जाणे" यावत्प्रमाणमाकाशमविभागिपुद्गलपरमाणुना विष्टब्धं व्याप्तं तदाकाशं खु स्फुटं प्रदेशं जानीहि हे शिष्य! कथंभूतं "सव्वाणुट्ठाणदाणरिहं" सर्वाणूनां सर्वपरमाणूनां सूक्ष्मस्कन्धानां च स्थानदानस्यावकाशदानस्यार्हं योग्यं समर्थमिति। यत एवेत्थंभूतावगाहनशक्तिरस्त्याकाशस्य तत एत्रासंख्यातप्रदेशोऽपि लोके अनन्तानन्तजीवास्तेभ्योऽप्यनन्तगुणपुद्गला अव-

---

कायत्व नहीं सिद्ध होता। कदाचित् कहो कि अणु यह पुद्गलकी संज्ञा है। कालकी अणु संज्ञा कैसे हुई? तो इसका उत्तर सुनो–"अणु" इस शब्दसे व्यवहारसे पुद्गल कहे जाते हैं और निश्चयसे तो वर्ण आदि गुणोंके पूरण तथा गलनके संबंधसे पुद्गल कहे जाते हैं; और यथार्थमें तो अणु शब्द सूक्ष्मका वाचक है, जैसे परम अर्थात् प्रकर्ष (अधिकता)से जो अणु हो सो परमाणु है। इस व्युत्पत्तिसे परमाणु शब्द जो है वह अति सूक्ष्म पदार्थको कहनेवाला है। और वह सूक्ष्म वाचक अणु शब्द निर्विभाग पुद्गलकी विवक्षामें तो पुद्गल अणुको कहता है और अविभागि (विभागरहित) कालद्रव्यके कहनेकी जब इच्छा होती है तब कालाणुको कहता है ॥२६॥

अब प्रदेशका लक्षण दिखाते हैं—

**गाथाभावार्थः**—जितना आकाश अविभागी पुद्गलाणुसे रोका जाता है उसको सब परमाणुओंको स्थान देनेमें समर्थ प्रदेश जानो ॥२७॥

**व्याख्यार्थः**—"जावदियं आयासं अविभागीपुग्गलाणुउट्टद्धं तं खु पदेसं जाणे" हे शिष्य! जितना आकाश विभागरहित पुद्गलपरमाणुसे व्याप्त है उसको स्पष्ट रूपसे प्रदेश जानो। वह प्रदेश कैसा है कि "सव्वाणुट्ठाणदाणरिहं" सब परमाणु और सूक्ष्म स्कन्धोंको अवकाश (स्थान) देनेके लिये समर्थ है। इस प्रकारकी अवगाहन शक्ति जो आकाशमें है इसी हेतुसे असंख्यात प्रदेश प्रमाण लोकाकाशमें अनन्तानन्त जीव तथा उन जीवोंसे भी अनन्त गुणे पुद्गल अवकाशको प्राप्त होते हैं। सोही जीव तथा पुद्गलके विषयमें इसके अवकाश देनेका सामर्थ्य आगममें कहा है। "एक निगोद शरीरमें द्रव्य-

काशं लभन्ते । तथा चोक्तं जीवपुद्गलविषयेऽवकाशदानसामर्थ्यम् "एगणिगोदसरीरे जीवा दव्वप्पमाणदो दिट्ठा। सिद्धेहिं अणंतगुणा सव्वेण वितीदकालेण ॥ १ ॥ उग्गाढ-गाढणिचिदो पुग्गलकाएहिं सव्वदो लोगो । सुहुमेहि बादरेहिं य णंताणंतेहिं विवि-हेहिं । २ ।" अथ मतं मूर्त्तपुद्गलानां भेदो भवतु नास्ति विरोधः । अमूर्त्ताखण्डस्याका-शद्रव्यस्य कथं विभागकल्पनेति । तन्न । रागाद्युपाधिरहितस्वसंवेदनप्रत्यक्षभावनोत्पन्नसु-खामृतरसास्वादतृप्तस्य मुनियुगलस्यावस्थानक्षेत्रमेकमनेकं वा । यद्येकं तर्हि द्वयोरेकत्वं प्राप्नोति न च तथा। भिन्नं चेत्तदा निर्विभागद्रव्यस्यापि विभागकल्पनमायातं घटाकाश-पटाकाशमित्यादिवदिति ॥ २७ ॥ एवं सूत्रपञ्चकेन पञ्चास्तिकायप्रतिपादकनामा तृती-योऽन्तराधिकारः ॥

इति श्रीनेमिचन्द्रसैद्धान्तदेवविरचिते द्रव्यसङ्ग्रहग्रन्थे नमस्कारादिसप्तविंशति-गाथाभिरन्तराधिकारत्रयसमुदायेन षड्द्रव्यपञ्चास्तिकायप्रतिपादक-नामा प्रथमोऽन्तराधिकारः समाप्तः ॥ १ ॥

---

प्रमाणसे सब भूतकालके सिद्धोंसे अनंत गुणे जीव दृष्ट हैं । १ । यह लोक सब तरफसे विविध तथा अनन्तानन्त सूक्ष्म और बादर पुद्गलकायोंद्वारा अतिसघनताके साथ भरा हुआ है । २ ।" अब कदाचित् ऐसा मत हो कि "मूर्तिमान् पुद्गलोंका तो अणु तथा व्यणुक स्कन्ध आदि विभाग हो, इसमें कुछ विरोध नहीं है; परन्तु अखंड तथा अमूर्त्त आकाश द्रव्यकी विभाग कल्पना कैसे हो सकती है ?" सो नहीं । क्योंकि राग आदि उपाधियोंसे रहित निज आत्मज्ञानकी प्रत्यक्ष भावनासे उत्पन्न जो सुखरूप अमृतरस है उसके आस्वा-दनसे तृप्त ऐसे मुनियुगल ( दो मुनियों ) के रहनेका स्थान एक है अथवा अनेक ? यदि दोनोंका निवासक्षेत्र एक ही है तब तो दोनोंकी एकता हुई; परन्तु ऐसा नहीं है । और यदि भिन्न मानो तो घटके आकाश तथा पटके आकाशकी तरह विभागरहित द्रव्यकी भी विभागकल्पना सिद्ध हुई ॥ २७ ॥ ऐसे पांच सूत्रोंद्वारा पंच अस्तिकायोंका निरूपण करनेवाला तृतीय अन्तराधिकार समाप्त हुआ ॥

इति श्रीनेमिचन्द्रसैद्धान्तिदेवविरचितद्रव्यसंग्रहस्य श्रीब्रह्मदेवनिर्मितसंस्कृतटीकायाः जयपुरनिवासिशास्त्रीत्युपाधिधारकश्रीजवाहरलालदि०जैनप्रणीतभाषा-नुवादे नमस्कारादिसप्तविंशतिगाथाभिरन्तराधिकारत्रयसमु-दायेन षड्द्रव्यपञ्चास्तिकायप्रतिपादकनामा प्रथमोऽन्त-राधिकारः समाप्तः ॥ १ ॥

---

# द्वितीयोऽधिकारः ॥ २ ॥

अतःपरं पूर्वोक्तषड्द्रव्याणां चूलिकारूपेण विस्तरव्याख्यानं क्रियते। तद्यथा—

परिणामि-जीव-मुत्तं, सपदेसं एय-खेत्त-किरिया य।
णिच्चं कारण-कत्ता, सव्वगदमिदरंहि यपवेसे ॥ १ ॥
दुण्णिय[1] एयं एयं, पंच-त्तिय एय दुण्णि चउरो य।
पंच य एयं एयं, एदेसं एय उत्तरं णेयं ॥ *युग्मम्*[2] ॥ २ ॥

व्याख्या—"परिणामि" इत्यादिव्याख्यानं क्रियते। परिणामपरिणामिनौ जीवपुद्गलौ स्वभावविभावपर्यायाभ्यां कृत्वा, शेषचत्वारि द्रव्याणि विभावव्यञ्जनपर्यायाभावान्मुख्यवृत्त्या पुनरपरिणामीति। "जीव" शुद्धनिश्चयनयेन विशुद्धज्ञानदर्शनस्वभावं शुद्धचैतन्यं प्राणशब्देनोच्यते तेन जीवतीति जीवः। व्यवहारनयेन पुनः कर्मोदयजनितद्रव्यभावरूपैश्चतुर्भिः प्राणैर्जीवति, जीविष्यति, जीवितपूर्वो वा जीवः पुद्गलादिपञ्चद्रव्याणि

---

अब इसके पश्चात् षट्द्रव्योंकी चूलिका ( परिशिष्ट अथवा उपसंहार ) रूपसे विशेष व्याख्यान करते हैं। सो इस प्रकार है—

गाथाभावार्थः—पूर्वोक्त षट्द्रव्योंमेंसे परिणामी द्रव्य जीव और पुद्गल ये दो हैं, चेतन द्रव्य एक जीव है, मूर्तिमान् एक पुद्गल है, प्रदेशसहित जीव, पुद्गल, धर्म, अधर्म तथा आकाश ये पांच द्रव्य हैं, एक संख्यावाले धर्म, अधर्म और आकाश ये तीन द्रव्य हैं, क्षेत्रवान् एक आकाश द्रव्य है, क्रियासहित जीव और पुद्गल ये दो द्रव्य हैं, नित्यद्रव्य-धर्म, अधर्म, आकाश तथा काल ये चार हैं, कारण द्रव्य-पुद्गल, धर्म, अधर्म, आकाश और काल ये पांच हैं, कर्त्ताद्रव्य-एक जीव है, सर्वगत ( सर्वमें व्यापनेवाला ) द्रव्य-एक आकाश है, और ये छहों द्रव्य प्रवेशरहित हैं अर्थात् एक द्रव्यमें दूसरे द्रव्यका प्रवेश नहीं होता है ॥ २ ॥ यहां इन दोनों गाथाओं को मिलाके अर्थ कहा गया है।

व्याख्यार्थः—"परिणामि" इत्यादि गाथाका व्याख्यान करते हैं-स्वभाव तथा विभाव पर्यायोंकरके परिणामसे परिणामी जीव और पुद्गल ये दो द्रव्य हैं और शेष ( बाकीके ) चार द्रव्य अर्थात् धर्म, अधर्म, आकाश तथा काल ये चार द्रव्य विभावव्यंजनपर्यायके अभावसे मुख्यतासे अपरिणामी हैं। "जीव" शुद्ध निश्चयनयसे निर्मल ज्ञान तथा दर्शन स्वभावका धारक जो शुद्ध चैतन्य है उसीको प्राण शब्दसे कहते हैं। उस शुद्ध चैतन्यरूप प्राणसे जो जीवता है वह जीव है; और व्यवहारनयसे कर्मोंके उदयसे उत्पन्न द्रव्य तथा

---

(१) यह गाथा यद्यपि संस्कृतटीकाकी प्रतियोंमें नहीं है, तथापि टीकाकारने इसका आशय ग्रहण किया है और जयचंद्रजीकृत द्रव्यसंग्रहकी वचनिका तथा मूल मुद्रित पुस्तकमें उपलब्ध होती है, अतः उपयोगी समझकर यहां लिख दी गई है। (२) ये दोनों गाथायें अन्य ग्रन्थकी हैं इसलिये इनमें मूलक्रमप्राप्त संख्या नहीं लगाई गई है।

पुनरजीवरूपाणि । "मुत्तं" शुद्धात्मनो विलक्षणस्पर्शरसगन्धवर्णवती मूर्त्तिरुच्यते, तत्सद्भावान्मूर्त्तः पुद्‌गलः । जीवद्रव्यं पुनरनुपचरितासद्भूतव्यवहारेण मूर्त्तमपि शुद्धनिश्चयनयेनामूर्त्तम्, धर्माधर्माकाशकालद्रव्याणि चामूर्त्तानि । "सपदेसं" लोकमात्रप्रमितासंख्येयप्रदेशलक्षणं जीवद्रव्यमादिं कृत्वा पञ्चद्रव्याणि पञ्चास्तिकायसंज्ञानि सप्रदेशानि । कालद्रव्यं पुनर्बहुप्रदेशत्वलक्षणकायत्वाभावादप्रदेशम् । "एय" द्रव्यार्थिकनयेन धर्माधर्माकाशद्रव्याण्येकानि भवन्ति । जीवपुद्‌गलकालद्रव्याणि पुनरनेकानि भवन्ति । "खेत्त" सर्वद्रव्याणामवकाशदानसामर्थ्यात् क्षेत्रमाकाशमेकम् । शेषपञ्चद्रव्याण्यक्षेत्राणि । "किरियाय" क्षेत्रात्क्षेत्रान्तरगमनरूपा परिस्पन्दवती चलनवती क्रिया, सा विद्यते ययोस्तौ क्रियावन्तौ जीवपुद्‌गलौ । धर्माधर्माकाशकालद्रव्याणि पुनर्निष्क्रियाणि । "णिच्चं" धर्माधर्माकाशकालद्रव्याणि यद्यप्यर्थपर्यायत्वेनानित्यानि, तथापि मुख्यवृत्त्या विभावव्यञ्जनपर्यायाभावान्नित्यानि, द्रव्यार्थिकनयेन च जीवपुद्‌गलद्रव्ये पुनर्यद्यपि द्रव्यार्थिकनयापेक्षया नित्ये तथाप्यगुरुलघुपरिणतिस्वभावपर्यायापेक्षया विभावव्यञ्जनपर्यायापेक्षया चानित्ये । "कारण" पुद्‌गलधर्माधर्माकाशकालद्रव्याणि व्यवहारनयेन जीवस्य

---

भाव रूप चार प्रकारके जो इन्द्रिय, बल, आयु और श्वासोच्छ्वास नामक प्राण हैं; उनसे जो जीवता है, जीवैगा और पूर्वकालमें जीता था वह जीव है । सो एक । और पुद्‌गल आदि पांच द्रव्य जो हैं वे तो अजीव रूप हैं। "मुत्तं" अमूर्त्त जो शुद्ध आत्मा है उससे विलक्षण स्पर्श, रस, गंध तथा वर्णवाली जो है उसको मूर्ति कहते हैं । उस मूर्तिके सद्भावसे अर्थात् उस मूर्तिका धारक होनेसे पुद्‌गल द्रव्य मूर्त्त है, और जीव द्रव्य यद्यपि अनुपचरित असद्भूतव्यवहारनयसे मूर्त्त है तथापि शुद्ध निश्चयनयसे अमूर्त है; तथा धर्म, अधर्म आकाश और कालद्रव्य अमूर्त्त हैं । "सपदेसं" लोकाकाशमात्रके प्रमाण असंख्यात प्रदेशोंको धारण करना है लक्षण जिसका ऐसे जीव द्रव्यको आदि लेके पंचास्तिकाय नामके धारक जो पांच द्रव्य हैं वे सप्रदेश (प्रदेशसहित) हैं, और बहुप्रदेशपना है लक्षण जिसका ऐसा जो कायत्व उसके न होनेसे कालद्रव्य अप्रदेश है । "एय" द्रव्यार्थिकनयसे धर्म, अधर्म और आकाश ये तीन द्रव्य एक एक हैं और जीव, पुद्‌गल तथा काल ये तीन द्रव्य अनेक हैं। "खेत्तं" सब द्रव्योंको अवकाश (स्थान) देनेका सामर्थ्य होनेसे क्षेत्र एक आकाश द्रव्य है और शेष पांच द्रव्य क्षेत्र नहीं हैं। "किरियाय" एक क्षेत्रसे दूसरे क्षेत्रमें गमन रूप अर्थात् हिलनेवाली अथवा चलनेवाली जो है वह क्रिया है, वह क्रिया जिनमें रहै वे क्रियावान् जीव तथा पुद्‌गल ये दो द्रव्य हैं, और धर्म, अधर्म, आकाश तथा काल ये चार द्रव्य क्रियासे शून्य हैं। "णिच्चं" धर्म, अधर्म, आकाश और काल ये चार द्रव्य यद्यपि अर्थपर्यायवासे अनित्य हैं तथापि मुख्यवृत्तिसे इनमें विभावव्यंजन पर्याय नहीं हैं इसलिये ये नित्य हैं; और द्रव्यार्थिक नयसे जीव, पुद्‌गल ये दो द्रव्य यद्यपि द्रव्यार्थिकनयकी अपेक्षासे नित्य हैं तथापि अगुरुलघुपरिणामरूप जो स्वभाव पर्याय हैं

शरीरवाङ्मनःप्राणापानादिगतिस्थित्यवगाहवर्त्तनाकार्याणि कुर्वन्तीति कारणानि भवन्ति। जीवद्रव्यं पुनर्यद्यपि गुरुशिष्यादिरूपेण परस्परोपग्रहं करोति तथापि पुद्गलादिपञ्चद्रव्याणां किमपि न करोतीत्यकारणम्। "कत्ता" शुद्धपारिणामिकपरमभावग्राहकेन शुद्धद्रव्यार्थिकनयेन यद्यपि बन्धमोक्षद्रव्यभावरूपपुण्यपापघटपटादीनामकर्त्ता जीवस्तथाप्यशुद्धनिश्चयेन शुभाशुभोपयोगाभ्यां परिणतः सन् पुण्यपापबन्धयोः कर्त्ता फलभोक्ता भवति। विशुद्धज्ञानदर्शनस्वभावनिजशुद्धात्मद्रव्यस्य सम्यक्श्रद्धानज्ञानानुष्ठानरूपेण शुद्धोपयोगेन तु परिणतः सन् मोक्षस्यापि कर्त्ता तत्फलभोक्ता चेति। शुभाशुभशुद्धपरिणामानां परिणमनमेव कर्तृत्वं सर्वत्र ज्ञातव्यमिति। पुद्गलादिपञ्चद्रव्याणां च स्वकीयस्वकीयपरिणामेन परिणमनमेव कर्तृत्वम्। वस्तुवृत्त्या पुनः पुण्यपापादिरूपेणाकर्तृत्वमेव। "सव्वगदं" लोकालोकव्याप्त्यपेक्षया सर्वगतमाकाशं भण्यते। लोकव्याप्त्यपेक्षया धर्माधर्मौ च। जीवद्रव्यं पुनरेकजीवापेक्षया लोकपूरणावस्थां विहायासर्वगतं, नानाजीवापेक्षया सर्वगतमेव भवति, पुद्गलद्रव्यं पुनर्लोकरूपमहास्कन्धापेक्षया सर्वगतं, शेषपुद्गलापेक्षया सर्वगतं न भवति, कालद्रव्यं पुनरेककालाणुद्रव्यापेक्षया सर्वगतं न भवति। लोकप्रदेशप्रमाणना-

---

उनकी अपेक्षासे तथा विभावव्यंजन पर्यायकी अपेक्षासे अनित्य हैं। "कारण" पुद्गल, धर्म, अधर्म, आकाश और काल ये जो द्रव्य हैं इनमेंसे व्यवहारनयकर जीवके-शरीर, वचन, मन, प्राण, अपान आदि कार्य तो पुद्गल द्रव्य करता है और गति, स्थिति, अवगाह तथा वर्त्तनारूप कार्यको क्रमसे धर्म आदि चार द्रव्य करते हैं; इसलिये पुद्गलादि पांच द्रव्य कारण हैं, और जीवद्रव्य यद्यपि गुरु, शिष्य आदि रूपसे परस्पर एक दूसरेका उपकार करता है तथापि पुद्गल आदि पांच द्रव्योंके प्रति यह जीव कुछ भी उपकार नहीं करता इसलिये अकारण है। "कत्ता" शुद्ध पारिणामिक परमभावका ग्राहक जो शुद्ध द्रव्यार्थिक नय है उसकी अपेक्षा यद्यपि बंध मोक्षके कारणभूत द्रव्य-भाव रूप जो पुण्य पाप, घट पट आदि हैं उनका कर्त्ता जीव नहीं है तथापि अशुद्ध निश्चयनयसे शुभ और अशुभ उपयोगोंसे परिणत हुआ पुण्य तथा पाप बंधका कर्त्ता और उनके फलका भोक्ता होता है। तथा विशुद्ध ज्ञानदर्शनस्वभावका धारक जो निज शुद्ध आत्मा द्रव्य है उसके सम्यक् श्रद्धान, ज्ञान और आचरण रूप शुद्धोपयोगसे परिणत हुआ यह जीव मोक्षका भी कर्त्ता और उस मोक्षके फलका भोक्ता (भोगनेवाला) होता है। यहां सब जगह शुभ, अशुभ तथा शुद्ध परिणामोंका जो परिणमन है उसीको कर्त्ता जानना चाहिये। और पुद्गल आदि पांच द्रव्योंके तो अपने अपने परिणामसे जो परिणमन है वही कर्तृत्व है तथा यथार्थमें तो पुण्य पाप आदि रूपसे अकर्तृता ही है॥ "सव्वगदं" लोक और अलोक इन दोनोंमें व्याप्तिकी अपेक्षा आकाशको ही सर्वगत कहते हैं तथा लोकमें व्याप्तिकी अपेक्षा धर्म और अधर्म सर्वगत हैं। एवं जीव द्रव्य जो है सो एक जीवकी अपेक्षासे लोकपूरणरूप जो अवस्था है उसके विना असर्वगत है और अनेक जीवोंकी अपेक्षासे सर्वगत ही होता है,

नाकालाणुविवक्षया लोके सवगतं भवति । "इदरंहि यपवेसे" यद्यपि सर्वद्रव्याणि व्यवहारेणैकक्षेत्रावगाहेनान्योन्यप्रवेशेन तिष्ठन्ति तथापि निश्चयनयेन चेतनादिस्वकीयस्वरूपं न त्यजन्तीति ॥ अत्र षड्द्रव्येषु मध्ये वीतरागचिदानन्दैकादिगुणस्वभावं शुभाशुभमनोवचनकायव्यापाररहितं निजशुद्धात्मद्रव्यमेवोपादेयमिति भावार्थः ॥

अत ऊर्ध्वं पुनरपि षड्द्रव्याणां मध्ये हेयोपादेयस्वरूपं विशेषेण विचारयति । तत्र शुद्धनिश्चयनयेन शक्तिरूपेण शुद्धबुद्धैकस्वभावत्वात्सर्वे जीवा उपादेया भवन्ति । व्यक्तिरूपेण पुनः पञ्चपरमेष्ठिन एव । तत्राप्यर्हत्सिद्धद्वयमेव । तत्रापि निश्चयेन सिद्ध एव । परमनिश्चयेन तु भोगाकाङ्क्षादिरूपसमस्तविकल्पजालरहितपरमसमाधिकाले सिद्धसदृशः स्वशुद्धात्मैवोपादेयः शेषद्रव्याणि हेयानीति तात्पर्यम् । शुद्धबुद्धैकस्वभाव इति कोऽर्थः ?

---

तथा पुद्गल द्रव्य है सो लोकरूप महास्कन्धकी अपेक्षासे तो सर्वगत है और शेष पुद्गलोंकी अपेक्षासे असर्वगत है; पुनः एक कालाणुद्रव्यकी अपेक्षासे तो कालद्रव्य सर्वगत नहीं होता है और लोकप्रदेशप्रमाण नाना कालाणुओंकी अपेक्षासे कालद्रव्य लोकमें सर्वगत है। "इदरंहि यपवेसे" यद्यपि व्यवहारनयसे सब द्रव्य एक क्षेत्रमें अवगाह (रहने) से परस्पर प्रवेश द्वारा तिष्ठते हैं तथापि निश्चयनयसे चेतना आदि जो अपना २ स्वरूप है उसको नहीं छोड़ते हैं इस कारण परस्पर प्रवेशरहित हैं। इस उपर्युक्त कथनका तात्पर्य यह है कि इन छहों द्रव्योंमें वीतराग, चिदानन्द, एक शुद्ध, बुद्ध आदि गुण ही हैं स्वभाव जिसके ऐसा, और शुभ तथा अशुभ जो मन, वचन और कायके व्यापार हैं उनसे रहित जो निज शुद्ध आत्मा द्रव्य है वही उपादेय है ॥

अब इसके उपरान्त फिर भी षट् द्रव्योंमेंसे क्या हेय है और क्या उपादेय है इस स्वरूपको विशेष रीतिसे विचारते हैं। उनमें शुद्ध निश्चयनयसे शक्तिरूपसे शुद्ध, बुद्ध एक स्वभावके धारक सभी जीव हैं इस कारण सर्व जीव ही उपादेय (ग्राह्य) हैं। और व्यक्तिरूपसे अर्हत्, सिद्ध, आचार्य, उपाध्याय तथा साधु ये पांच परमेष्ठी ही उपादेय हैं। इन पांचोंमेंसे भी अर्हत-सिद्ध ये दो ही उपादेय हैं। इन दोमेंसे भी निश्चयकी अपेक्षासे सिद्ध ही उपादेय हैं और परम-निश्चयसे भोगोंकी अभिलाषा आदि रूप जो संपूर्ण विकल्पोंके समूह हैं उनसे रहित जो परमध्यानका समय है उस समयमें सिद्धोंके समान जो निज शुद्ध आत्मा है; वही उपादेय है। अन्य सब द्रव्य हेय हैं। यह तात्पर्य है। अब 'शुद्धबुद्धैकस्वभाव' इस पदका क्या अर्थ है सो कहते हैं-मिथ्यात्व, राग आदि संपूर्ण विभावोंसे रहित होनेके कारण आत्मा शुद्ध कहा जाता है। तथा केवलज्ञान आदि अनंत गुणोंसे सहित होनेसे आत्मा बुद्ध कहा जाता है। इस प्रकार जहां जहां 'शुद्धबुद्धैकस्वभाव' यह पद आवै वहां वहां सर्वत्र यही पूर्वोक्त लक्षण समझना चाहिये। इस रीतिसे षट्द्रव्योंकी चूलिका समाप्त हुई। अब 'चूलिका' इस शब्दका अर्थ कहते हैं। "चूलिका" किसी

मिथ्यात्वरागादिसमस्तविभावरहितत्वेन शुद्ध इत्युच्यते। केवलज्ञानाद्यनन्तगुणसहितत्वाद्बुद्धः। इति शुद्धबुद्धैकलक्षणं सर्वत्र ज्ञातव्यम्। इति षड्द्रव्यचूलिका समाप्ता। चूलिकाशब्दार्थः कथ्यते—चूलिका विशेषव्याख्यानम्, अथवा उक्तानुक्तव्याख्यानम्, उक्तानुक्तसंकीर्णव्याख्यानं चेति॥

अतः परं जीवपुद्गलपर्यायरूपाणामास्रवादिसप्तपदार्थानामेकादशगाथापर्यन्तं व्याख्यानं करोति। तत्रादौ "आसवबंधण" इत्याद्यधिकारसूत्रगाथैका, तदनन्तरमास्रवपदार्थव्याख्यानरूपेण "आसवदि जेण" इत्यादि गाथात्रयं, ततःपरं बन्धव्याख्यानकथनेन "वज्झदि कम्मं" इति प्रभृतिगाथाद्वयं, ततोऽपि संवरकथनरूपेण "चेदणपरिणामो" इत्यादिसूत्रद्वयं, ततश्च निर्जराप्रतिपादनरूपेण "जहकालेण तवेण य" इति प्रभृतिसूत्रमेकं, तदनन्तरं मोक्षस्वरूपकथनेन "सव्वस्स कम्मणो" इत्यादि सूत्रमेकं, ततश्च पुण्यपापद्वयकथनेन "सुहअसुह" इत्यादि सूत्रमेकं चेत्येकादशगाथाभिः स्थलसप्तकसमुदायेन द्वितीयाधिकारे समुदायपातनिका॥

अत्राह शिष्यः—यद्येकान्तेन जीवाजीवौ परिणामिनौ भवतस्तदा संयोगपर्यायरूप एक एव पदार्थः, यदि पुनरेकान्तेनापरिणामिनौ भवतस्तदा जीवाजीवद्रव्यरूपौ द्वावेव

---

पदार्थके विशेष व्याख्यानको अथवा उक्त (कहे हुए) विषयमें जो अनुक्त (नहीं कहा हुआ) है उसके व्याख्यानको तथा उक्त तथा अनुक्तसे मिला हुआ जो कथन है उसको कहते हैं॥

अब इस चूलिकाके पश्चात् जीव और पुद्गल द्रव्यके पर्याय रूप जो आस्रव आदि सप्त ७ पदार्थ हैं उनका एकादश ११ गाथाओंद्वारा इस द्वितीय अधिकारमें व्याख्यान करते हैं। उसमें प्रथम "आसवबंधण" इत्यादि २८ वीं एक गाथा अधिकार सूत्ररूप है और उसके अनन्तर आस्रवपदार्थके व्याख्यानरूपसे "आसवदि जेण" इत्यादि २९।३०।३१ वीं तीन गाथायें हैं। उसके अनन्तर "वज्झदि कम्मं जेण" इत्यादि ३२ वीं ३३ वीं दो गाथाओंमें बंध पदार्थका निरूपण है। उसके पश्चात् "चेदणपरिणामो" इत्यादि ३४।३५ की दो गाथाओंमें संवर पदार्थका कथन है। फिर निर्जरा पदार्थके प्रतिपादन रूपसे "जह कालेण तवेण य" इत्यादि ३६ वीं एक गाथा है। उसके अनन्तर मोक्षके स्वरूपनिरूपणरूपसे "सव्वस्स कम्मणो" इत्यादि एक ३७वीं गाथा है। उसके पश्चात् पुण्य, पाप इन दो पदार्थोंके कथन रूपसे "सुहासुहं" इत्यादि एक ३८ वीं गाथा है॥ ऐसे एकादश ११ गाथाओं द्वारा सप्त स्थलोंके समुदाय सहित द्वितीय अधिकारकी समुदाय-पातनिका समझनी चाहिये॥

अब यहांपर शिष्य प्रश्न करता है कि हे गुरो! यदि जीव तथा अजीव ये दोनों द्रव्य एकान्तसे (सर्वथा) परिणामी ही हैं तो संयोगपर्यायरूप एक ही पदार्थ सिद्ध होता है; और यदि सर्वथा अपरिणामी हैं तो जीव, अजीव द्रव्य रूप दो ही पदार्थ सिद्ध होते हैं;

पदार्थौ, तत आस्रवादि सप्तपदार्थाः कथं घटन्त इति। तत्रोत्तरं—कथंचित्परिणामित्वाद् घटन्ते। कथंचित्परिणामित्वमिति कोऽर्थः? यथा स्फटिकमणिविशेषो यद्यपि स्वभावेन निर्मलस्तथापि जपापुष्पाद्युपाधिजनितं पर्यायान्तरं परिणतिं गृह्णाति। यद्यप्युपाधिं गृह्णाति तथापि निश्चयेन शुद्धस्वभावं न त्यजति तथा जीवोऽपि यद्यपि शुद्धद्रव्यार्थिकनयेन सहजशुद्धचिदानन्दैकस्वभावस्तथाप्यनादिकर्मबन्धपर्यायवशेन रागादिपरद्रव्योपाधिपर्यायं गृह्णाति। यद्यपि परपर्यायेण परिणमति तथापि निश्चयेन शुद्धस्वरूपं न त्यजति। पुद्गलोऽपि तथेति। परस्परसापेक्षत्वं कथंचित्परिणामित्वशब्दस्यार्थः। एवं कथंचित्परिणामित्वे सति जीवपुद्गलसंयोगपरिणतिनिर्वृत्तत्वादास्रवादिसप्तपदार्था घटन्ते। ते च पूर्वोक्तजीवाजीवाभ्यां सह नव भवन्ति तत एव नव पदार्थाः। पुण्यपापपदार्थद्वयस्याभेदनयेन कृत्वा पुण्यपापयोर्बन्धपदार्थस्य वा मध्ये अन्तर्भावविवक्षया सप्ततत्त्वानि भण्यन्ते॥ हे

---

इस कारण आस्रव आदि सप्त पदार्थ कैसे सिद्ध होते हैं?। अब इसका उत्तर कहते हैं कि कथंचित् परिणामी होनेसे सप्त पदार्थोंका कथन संगत होता है। "कथंचित्परिणामित्व" इसका क्या अर्थ है? सो सुनो—जैसे मणियोंके भेदरूप जो स्फटिकमणि है वह यद्यपि स्वभावसे निर्मल है तथापि जपापुष्प (जवा अथवा गुड़हलका फूल) आदिकी उपाधिसे उत्पन्न जो रक्तत्व आदि अन्य पर्याय है उस रूप परिणमता है अर्थात् सर्वथा निर्मल स्फटिक मणिके साथ जब जपापुष्पका योग होता है तब वह उस पुष्पके समान रक्तवर्णका ही धारक हो जाता है। यहां स्फटिकमणि यद्यपि उपाधिको ग्रहण करता है तथापि निश्चयसे अपना जो निर्मल स्वभाव है उसको नहीं छोड़ता है। ऐसे ही जीव भी यद्यपि शुद्धद्रव्यार्थिकनयसे स्वभावसे उत्पन्न शुद्ध चिदानन्दरूप स्वभावका धारक है तथापि अनादि कर्मबंध रूप जो पर्याय है उसके वशसे राग आदि परद्रव्यजनित जो उपाधिपर्याय है, उसको ग्रहण करता है। यहां यद्यपि जीव परपर्यायके रूपसे परिणमन करता है तथापि निश्चयनयसे जो अपना शुद्ध स्वरूप है उसको नहीं छोड़ता है। इसी प्रकार पुद्गल द्रव्य भी अन्यकी उपाधिसे परिणमनको प्राप्त होजाता है। इस कारण परस्परकी अपेक्षासहित होना यही "कथंचित्परिणामित्व" शब्दका अर्थ है। इस रीतिसे कथंचित्परिणामित्व सिद्ध होनेपर जीव और पुद्गलके संयोगकी परिणति (परिणाम) से रचे हुए आस्रव आदि सप्त पदार्थ घटित होते हैं। और वे आस्रव आदि सप्त पदार्थ पूर्वोक्त जो जीव और अजीव दो द्रव्य हैं उन सहित नव ९ होते हैं इसलिये नव पदार्थ कहे जाते हैं। तथा इन नव पदार्थोंमें जो पुण्य और पाप नामक दो पदार्थ हैं इनका पूर्व सप्त पदार्थोंसे अभेद करनेसे अथवा पुण्य और पाप पदार्थका बन्ध पदार्थमें अन्तर्भाव (शामिल) करनेसे सप्त तत्त्व कहे जाते हैं। शिष्य प्रश्न करता है कि हे भगवन्! यद्यपि कथंचित्परिणामित्व माननेके बलसे भेदप्रधान पर्यायार्थिकनयकी अपेक्षासे नव ९ पदार्थ तथा सप्त ७ तत्त्व सिद्ध हो गये तथापि इनसे क्या प्रयोजन सिद्ध हुआ? क्योंकि जैसे अभेदनयसे पुण्य, पाप इन दो पदार्थोंका प्रथम

भगवन्, यद्यपि कथंचित्परिणामित्वबलेन भेदप्रधानपर्यायार्थिकनयेन नवपदार्थाः सप्ततत्त्वानि वा सिद्धानि तथापि तैः किं प्रयोजनम्। यथैवाभेदनयेन पुण्यपापपदार्थद्वयस्यान्तर्भावो जातस्तथैव विशेषाभेदनयविवक्षायामास्रवादिपदार्थानामपि जीवाजीवद्वयमध्येऽन्तर्भावे कृते जीवाजीवौ द्वावेव पदार्थाविति। तत्र परिहारः—हेयोपादेयतत्त्वपरिज्ञानप्रयोजनार्थमास्रवादिपदार्थाः व्याख्येया भवन्ति। तदेव कथयति-उपादेयतत्त्वमक्षयानन्तसुखं, तस्य कारणं मोक्षो, मोक्षस्य कारणं संवरनिर्जराद्वयं, तस्य कारणं विशुद्धज्ञानदर्शनस्वभावनिजात्मतत्त्वसम्यक्श्रद्धानज्ञानानुचरणलक्षणं निश्चयरत्नत्रयस्वरूपं, तत्साधकं व्यवहाररत्नत्रयरूपं चेति। इदानीं हेयतत्त्वं कथ्यते—आकुलत्वोत्पादकं नारकादिदुःखं निश्चयेनेन्द्रियसुखं च हेयतत्त्वम्। तस्य कारणं संसारः, संसारकारणमास्रवबन्धपदार्थद्वयं, तस्य कारणं पूर्वोक्तव्यवहारनिश्चयरत्नत्रयाद्विलक्षणं मिथ्यादर्शनज्ञानचारित्रत्रयमिति। एवं हेयोपादेयतत्त्वव्याख्याने कृते सति सप्ततत्त्वनवपदार्थाः स्वयमेव सिद्धाः।

इदानीं कस्य पदार्थस्य कः कर्त्तेति कथ्यते—निजनिरञ्जनशुद्धात्मभावनोत्पन्नपरमानन्दैकलक्षणसुखामृतरसास्वादपराङ्मुखो बहिरात्मा भण्यते। स चास्रवबन्धपापपदार्थ-

---

सप्त पदार्थोंमें अन्तर्भाव हुआ है उसी प्रकार विशेष अभेदनयकी विवक्षामें आस्रव आदि पदार्थोंका भी जीव और अजीव इन दोनों पदार्थोंमें अन्तर्भाव करलेनेसे जीव तथा अजीव ये दो ही पदार्थ सिद्ध हो जायेंगे। अब इस शिष्यकी शंकाका परिहार करते हैं कि हे शिष्य ! कौन तत्त्व हेय है और कौन तत्त्व उपादेय है इस विषयका ज्ञान होनेके प्रयोजनके लिये आस्रव आदि पदार्थ निरूपण करने योग्य होते हैं। अब इसी विषयको कहते हैं कि अविनाशी अनंत सुख जो है वह उपादेय तत्त्व है। उस अक्षय अनंत सुखका कारण मोक्ष है और उस मोक्षके कारण संवर और निर्जरा ये दोनों पदार्थ हैं। उन संवर और निर्जराका कारण, विशुद्ध-ज्ञानदर्शनस्वभावका धारक जो निजात्मा है उसके स्वरूपका सम्यग श्रद्धान, ज्ञान तथा आचरण करने रूप निश्चय रत्नत्रय स्वरूप है, और उस निश्चय रत्नत्रयको साधनेवाला व्यवहाररत्नत्रय है। अब हेयतत्त्वका कथन करते हैं—आकुलताको उत्पन्न करनेवाला जो नरकगति आदिका दुःख तथा इन्द्रियोंसे उत्पन्न हुआ सुख है वह हेय (त्याज्य) तत्त्व है, उसका कारण संसार है और संसारके कारण आस्रव तथा बंध ये दो पदार्थ हैं, और उस आस्रवका तथा बंधका कारण पूर्वकथित जो व्यवहार और निश्चयरत्नत्रय है उससे विपरीत लक्षणके धारक मिथ्यादर्शन, मिथ्याज्ञान तथा मिथ्याचारित्र ये तीन हैं। इस प्रकार हेय और उपादेय तत्त्वका निरूपण करने पर सप्ततत्त्व तथा नव पदार्थ स्वयं ही सिद्ध हो गये ॥

अब किस पदार्थका कौन कर्ता है इस विषयका उपदेश करते हैं। निज निरंजन शुद्ध आत्मा जो है उसकी भावना (चिंतवन) से उत्पन्न जो परम आनन्दरूप लक्षणवाला सुखामृतका रस है उसके आस्वादसे पराङ्मुख (रहित) जो जीव है वह बहिरात्मा

त्रयस्य कर्ता भवति। क्वापि काले पुनर्मन्दमिथ्यात्वमन्दकषायोदये सति भोगाकाङ्क्षादिनिदानबन्धेन भाविकाले पापानुबन्धिपुण्यपदार्थस्यापि कर्त्ता भवति। यस्तु पूर्वोक्तबहिरात्मनो विलक्षणः सम्यग्दृष्टिः स संवरनिर्जरामोक्षपदार्थत्रयस्य कर्त्ता भवति। रागादिविभावरहितपरमसामायिके यदा स्थातुं समर्थो न भवति तदा विषयकषायोत्पन्नदुर्ध्यानवञ्चनार्थं संसारस्थितिच्छेदं कुर्वन् पुण्यानुबन्धितीर्थंकरनामप्रकृत्यादिविशिष्टपुण्यपदार्थस्य कर्त्ता भवति। कर्तृत्वविषये नयविभागः कथ्यते। मिथ्यादृष्टेर्जीवस्य पुद्गलद्रव्यपर्यायरूपाणामास्रवबन्धपुण्यपापपदार्थानां कर्तृत्वमनुपचरितासद्भूतव्यवहारेण, जीवभावपर्यायरूपाणां पुनरशुद्धनिश्चयनयेनेति। सम्यग्दृष्टेस्तु संवरनिर्जरामोक्षपदार्थानां द्रव्यरूपाणां यत्कर्तृत्वं तदप्यनुपचरितासद्भूतव्यवहारेण, जीवभावपर्यायरूपाणां तु विवक्षितैकदेशशुद्धनिश्चयनयेनेति। परमशुद्धनिश्चयेन तु "ण वि उप्पज्जइ, ण वि मरइ, बंधु ण मोक्खु करेइ। जिउ परमत्थे जोइया, जिणवरु एम भणेइ ॥ १ ॥" इति वचनाद्बन्धमोक्षौ न स्तः। स च पूर्वोक्तविवक्षितैकदेशशुद्धनिश्चय आगमभाषया किं भण्यते—स्वशुद्धात्मसम्यक्श्रद्धानज्ञानानुचरणरूपेण भविष्यतीति भव्यः, एवंभूतस्य भव्यत्वसंज्ञस्य पारिणामिकभावस्य संबन्धिनी व्यक्तिर्भण्यते। अध्यात्मभाषया पुनर्द्रव्यशक्तिरूपशुद्धपा-

---

कहलाता है। वह बहिरात्मा आस्रव, बंध और पाप इन तीन पदार्थोंका कर्त्ता होता है; और किसी समय जब कषाय और मिथ्यात्वका उदय मंद होता है तब भोगोंकी अभिलाषा आदि रूप निदानके बंधसे पापसे संबंध रखनेवाले पुण्यपदार्थका भी कर्त्ता होता है। तथा जो पूर्वोक्त बहिरात्मासे विपरीत लक्षणका धारक सम्यग्दृष्टि जीव है वह संवर, निर्जरा तथा मोक्ष इन तीन पदार्थोंका कर्त्ता होता है, और यह सम्यग्दृष्टि जीव जिस समय राग आदि विभावोंसे रहित जो परम सामायिक है उसमें स्थित रहनेको समर्थ नहीं होता है उस समय विषयकषायोंसे उत्पन्न जो दुर्ध्यान उसके वंचनार्थ अर्थात् न होनेके लिये संसारकी स्थितिका नाश करता हुआ पुण्यसे संबंध रखनेवाला जो तीर्थंकर नाम प्रकृति आदि विशिष्ट पुण्य पदार्थ है उसका कर्त्ता होता है। अब कर्तृत्वके विषयमें नयोंके विभागका निरूपण करते हैं। मिथ्यादृष्टि जीवके जो पुद्गल द्रव्यपर्याय रूप आस्रव, बंध तथा पुण्य, पाप पदार्थोंका कर्त्तापना है सो अनुपचरित असद्भूत व्यवहारनयकी अपेक्षासे है और जीव भाव (देव, मनुष्य) आदि पर्यायरूप पदार्थोंका कर्तृत्व अशुद्ध निश्चयनयसे है। तथा सम्यग्दृष्टि जीव जो द्रव्यरूप संवर, निर्जरा तथा मोक्ष पदार्थका कर्त्ता है, सोभी अनुपचरित असद्भूत व्यवहार नयसे ही है। तथा जीव भावपर्याय रूपोंका जो कर्त्ता है सो विवक्षित एकदेश शुद्ध निश्चय नयसे है। और परम शुद्ध निश्चय नयकी अपेक्षासे तो "जो परमार्थदृष्टिसे देखें तो यह जीव न उत्पन्न होता है, न मरता है और न बंध तथा न मोक्षको करता है, इस प्रकार श्रीजिनेन्द्र कहते हैं" इस वचनसे जीवके बंध और मोक्ष ही नहीं है। इसलिये विवक्षितैकदेश शुद्धनिश्चयनयसे ही जीवभावपर्यायोंका जीवको कर्तृत्व है। अब आगमभाषासे

रिणामिकभावविषये भावना भण्यते, पर्यायनामान्तरेण निर्विकल्पसमाधिर्वा शुद्धोपयोगादिकं वेति। यत एव भावना मुक्तिकारणं तत एव शुद्धपारिणामिकभावो ध्येयरूपो भवति, ध्यानभावनारूपो न भवति। कस्मादिति चेत्-ध्यानभावनापर्यायो विनश्वरः स च द्रव्यरूपत्वादविनश्वर इति। इदमत्र तात्पर्यं-मिथ्यात्वरागादिविकल्पजालरहितनिजशुद्धात्मभावनोत्पन्नसहजानन्दैकलक्षणसुखसंवित्तिरूपा च भावना मुक्तिकारणं भवति। तां च कोऽपि जनः केनापि पर्यायनामान्तरेण भणतीति। एवं पूर्वोक्तप्रकारेणानेकान्तव्याख्यानेनास्रवबन्धपुण्यपापपदार्थाः जीवपुद्गलसंयोगपरिणामरूपविभावपर्यायेणोत्पद्यते। संवरनिर्जरामोक्षपदार्थाः पुनर्जीवपुद्गलसंयोगपरिणामविनाशोत्पन्नेन विवक्षितस्वभावपर्यायेणेति स्थितम्॥

तद्यथा—

आसव बंधण संवर णिज्जर मोक्खो सपुण्णपावा जे।
जीवाजीवविसेसा तेवि समासेण पभणामो॥ २८॥

---

क्या कहते हैं सो दर्शाते हैं—निज शुद्ध आत्माके सम्यक् श्रद्धान, ज्ञान तथा आचरण रूपसे जो होगा उसे भव्य कहते हैं। इस प्रकारका जो भव्यत्व संज्ञाका धारक जीव है उसके पारिणामिक भावसे संबंध रखनेवाली व्यक्ति कही जाती है अर्थात् भव्यके पारिणामिक भावकी व्यक्ति (प्रकटता) है। और अध्यात्मभाषासे द्रव्यशक्ति रूप जो शुद्ध भाव है उसके विषयमें भावना कहते हैं। अन्य नामोंसे इसी द्रव्य शक्ति रूप पारिणामिक भावकी भावनाको निर्विकल्प ध्यान तथा शुद्ध उपयोग आदि कहते हैं। भावना मुक्तिका कारण है। इसी कारण जो शुद्ध पारिणामिक भाव है वह ध्येय (ध्यान करने योग्य) रूप होता है और ध्यानरूप नहीं होता। ऐसा क्यों होता है यह पूछो तो उत्तर यह है कि ध्यानभावना पर्याय है सो तो विनाशका धारक है और ध्येयभावना पर्याय द्रव्यरूप होनेसे विनाशरहित है। तात्पर्य यहांपर यह है कि मिथ्यात्व, राग आदि जो विकल्पोंके समूह हैं उनसे रहित जो निज शुद्ध आत्मा उसकी भावनासे उत्पन्न सहज (स्वभावसे उत्पन्न) आनन्द रूप एक सुखके ज्ञानको धारण करनेवाली जो भावना है वही मुक्तिका कारण है। उसी भावनाको कोई पुरुष किसी (निर्विकल्प ध्यान, शुद्धोपयोग आदि रूप) अन्य नामके द्वारा कहता है॥

इस पूर्वोक्त प्रकारसे अनेकान्त (स्याद्वाद) का आश्रय कर कथन करनेसे आस्रव, बंध, पुण्य और पाप ये चार पदार्थ जीव और पुद्गलके संयोग परिणामरूप जो विभाव पर्याय है उससे उत्पन्न होते हैं। और संवर, निर्जरा तथा मोक्ष ये तीन पदार्थ जीव और पुद्गलके संयोग रूप परिणामके विनाशसे उत्पन्न जो विवक्षित स्वभाव पर्याय है उससे उत्पन्न होते हैं, यह निश्चित हुआ।

व्याख्या—"आसव" निरास्रवस्वसंवित्तिविलक्षणशुभपरिणामेन शुभाशुभकर्मागमनमास्रवः। "बंधण" बन्धातीतशुद्धात्मोपलम्भभावनाच्युतजीवस्य कर्मप्रदेशैः सह संश्लेषो बन्धः। "संवर" कर्मास्रवनिरोधसमर्थस्वसंवित्तिपरिणतजीवस्य शुभाशुभकर्मागमनसंवरणं संवरः। "णिज्जर" शुद्धोपयोगभावनासामर्थ्येन नीरसीभूतकर्मपुद्गलानामेकदेशगलनं निर्जरा। "मोक्खो" जीवपुद्गलसंश्लेषरूपबन्धस्य विघटने समर्थः स्वशुद्धात्मोपलब्धिपरिणामो मोक्ष इति। "सपुण्णपावा जे" पुण्यपापसहिता ये "ते वि समासेण पभणामो" यथा जीवाजीवपदार्थौ व्याख्यातौ पूर्वं तथा तानप्यास्रवादिपदार्थान् समासेण संक्षेपेण प्रभणामो वयं, ते च कथंभूताः "जीवाजीवविसेसा" जीवाजीवविशेषाः। विशेषा इत्यस्य कोऽर्थः, पर्यायाः। चैतन्या अशुद्धपरिणामा जीवस्य, अचेतनाः कर्मपुद्गलपर्याया अजीवस्येत्यर्थः॥ एवमधिकारसूत्रगाथा गता॥ २८॥

---

अब पूर्वोक्त पदार्थोंका निरूपण करते हैं, सो इस प्रकार है—

गाथाभावार्थः—अब जो आस्रव, बंध संवर, निर्जरा, मोक्ष, पुण्य तथा पाप ऐसे सात जीव, अजीवके भेदरूप पदार्थ हैं; इनको भी संक्षेपसे कहते हैं॥ २८॥

व्याख्यार्थः—"आस्रव" आस्रवसे रहित जो निज आत्माका ज्ञान है उससे विलक्षण जो शुभ तथा अशुभ परिणाम है उस परिणामसे जो शुभ और अशुभ कर्मोंका आगमन है सो आस्रव है। "बंधण" बंधसे रहित जो शुद्ध आत्मा है उसकी प्राप्तिस्वरूप जो भावना है उस भावनासे गिरे हुये जीवका जो कर्मके प्रदेशोंके साथ परस्पर बंध है, इसको बंध कहते हैं। "संवर" कर्मोंके आस्रवको रोकनेमें समर्थ जो निज आत्मज्ञान है उस ज्ञानमें परिणत जीवके जो शुभ तथा अशुभ कर्मोंके आनेका निरोध है वह संवर है। "णिज्झर" शुद्ध उपयोगकी भावनाके बलसे नीरसीभूत (शक्तिहीन) हुए ऐसे कर्मपुद्गलोंका जो एकदेशसे गलन अर्थात् नाश है उसको निर्जरा कहते हैं। "मोक्खो" जीव तथा पुद्गलका जो परस्पर मेलनरूप बंध है उस बंधको नाश करनेमें समर्थ जो निज शुद्ध आत्माकी प्राप्तिरूप परिणाम है वह मोक्ष कहा जाता है। "सपुण्णपावा जे" पुण्य तथा पाप सहित जो आस्रव आदि पदार्थ हैं "ते वि समासेण पभणामो" उनको भी जैसे पहले जीव, अजीव कहे उसी प्रकार संक्षेपसे हम कहते हैं—और वे कैसे हैं कि 'जीवाजीवविसेसा" जीव तथा अजीवके विशेष अर्थात् पर्याय हैं। तात्पर्य यह कि चैतन्य आस्रव आदि तो जीवके अशुद्ध परिणाम हैं और अचेतन जो कर्मपुद्गलोंके पर्याय हैं वे अजीवके हैं॥ इस प्रकार आस्रव आदि अधिकारसूत्रकी गाथा गाई (समाप्त हुई)॥ २८॥

अब तीन गाथाओंसे आस्रव पदार्थका व्याख्यान करते हैं, उसमें प्रथम ही भावास्रव तथा द्रव्यास्रवकी सूचना करते हैं;—

अथ गाथात्रयेणास्रवव्याख्यानं क्रियते, तत्रादौ भावास्रवद्रव्यास्रवस्वरूपं सूचयति;—

आसवदि जेण कम्मं परिणामेणप्पणो स विण्णेओ।
भावासवो जिणुत्तो कम्मासवणं परो होदि ॥ २९ ॥

व्याख्या—"आसवदि जेण कम्मं परिणामेणप्पणो स विण्णेओ भावासवो" आस्रवति कर्म येन परिणामेनात्मनः स विज्ञेयो भावास्रवः। कर्मास्रवनिर्मूलनसमर्थशुद्धात्मभावनाप्रतिपक्षभूतेन येन परिणामेनास्रवति कर्म कस्यात्मनः स्वस्य स परिणामो भावास्रवो विज्ञेयः। स च कथंभूतः "जिणुत्तो" जिनेन वीतरागसर्वज्ञेनोक्तः। "कम्मासवणं परो होदि" कर्मास्रवणं परो भवति। ज्ञानावरणादिद्रव्यकर्मणामास्रवणमागमनं परः। पर इति कोऽर्थः—भावास्रवादन्यो भिन्नो भावास्रवनिमित्तेन तैलम्रक्षितानां धूलिसमागम इव द्रव्यास्रवो भवतीति। ननु "आस्रवति येन कर्म" तेनैव पदेन द्रव्यास्रवो लब्धः, पुनरपि कर्मास्रवणं परो भवतीति द्रव्यास्रवव्याख्यानं किमर्थमिति यदुक्तं त्वया। तन्न। येन परिणामेन किं भवति आस्रवति कर्म तत्परिणामस्य सामर्थ्यं दर्शितं न च द्रव्यास्रवव्याख्यानमिति भावार्थः ॥ २९ ॥

---

गाथाभावार्थः—जिस परिणामसे आत्माके कर्मका आस्रव होता है उसको श्रीजिनेन्द्रद्वारा कहा हुआ भावास्रव जानना चाहिये। और भावास्रवसे भिन्न ज्ञानावरणादि रूप कर्मोंका जो आस्रव है सो द्रव्यास्रव होता है ॥ २९ ॥

व्याख्यार्थः—"आसवदि जेण कम्मं परिणामेणप्पणो स विण्णेओ भावासवो" आत्माके जिस परिणामसे कर्मका आस्रव हो वह परिणाम भावास्रव है, यह जानना चाहिये। भावार्थ यह है कि कर्मास्रवके दूर करनेमें समर्थ जो शुद्ध आत्माकी भावना है उस भावनाके प्रतिपक्षभूत (विरोधी) जिस परिणामसे अपने आत्माके कर्मका आस्रव होता है उस परिणामको भावास्रव जानना चाहिये। वह भावास्रव कैसा है कि "जिणुत्तो" जिन जो श्रीवीतराग सर्वज्ञ देव हैं उनसे कहा हुआ है। "कम्मासवणं परो होदि" कर्मोंका जो आस्रवण है वह पर होता है अर्थात् ज्ञानावरण आदि द्रव्य कर्मोंका जो आस्रवण (आगमन) है वह पर है। पर शब्दका अर्थ यह है कि भावास्रवसे भिन्न। भावार्थ—जैसे तेलसे चुपड़े हुए पदार्थोंके धूलका समागम होता है उसी प्रकार भावास्रवके निमित्तसे जीवके द्रव्यास्रव होता है। अब यहां कोई शंका करते हैं कि "आसवदि जेण कम्मं" (जिससे कर्मका आस्रव होता है) इसी पदसे द्रव्यास्रवकी प्राप्ति होगई फिर "कम्मासवणं परो होदि" (इससे भिन्न कर्मास्रव होता है) इस पदसे द्रव्यास्रवका व्याख्यान किस प्रयोजनके लिये किया? समाधान—यह शंका जो तुमने कही सो ठीक नहीं। क्योंकि "जिस परिणामसे क्या होता है कि कर्मका आस्रव होता है" यह जो कथन है उससे परिणामका सामर्थ्य दिखाया गया है, द्रव्यास्रवका व्याख्यान नहीं किया गया। यह भावार्थ है ॥ २९ ॥

अथ भावास्रवस्वरूपं विशेषेण कथयति;—

मिच्छत्ताविरदिपमादजोगकोधादओऽथ विण्णेया ।
पण पण पणदस तिय चदु कमसो भेदा दु पुव्वस्स ॥ ३० ॥

व्याख्या। "मिच्छत्ताविरदिपमादजोगकोधादओ" मिथ्यात्वाविरतिप्रमादयोगक्रोधादयः। अभ्यन्तरे वीतरागनिजात्मतत्त्वानुभूतिरुचिविषये विपरीताभिनिवेशजनकं, बहिर्विषये तु परकीयशुद्धात्मतत्त्वप्रभृतिसमस्तद्रव्येषु विपरीताभिनिवेशोत्पादकं च मिथ्यात्वं भण्यते। अभ्यन्तरे निजपरमात्मस्वरूपभावनोत्पन्नपरमसुखामृतरतिविलक्षणा बहिर्विषये पुनरव्रतरूपा चेत्यविरतिः। अभ्यन्तरे निष्प्रमादशुद्धात्मानुभूतिचलनरूपः बहिर्विषये तु मूलोत्तरगुणमलजनकश्चेति प्रमादः। निश्चयेन निष्क्रियस्यापि परमात्मनो व्यवहारेण वीर्यान्तरायक्षयोपशमोत्पन्नो मनोवचनकायवर्गणावलम्बनः कर्मादानहेतुभूत आत्मप्रदेशपरिस्पन्दो योग इत्युच्यते। अभ्यन्तरे परमोपशममूर्त्तिकेवलज्ञानाद्यनन्तगुणस्वभावपरमात्मस्वरूपक्षोभकारकाः बहिर्विषये तु परेषां संबन्धित्वेन क्रूरत्वाद्यावेशरूपाः क्रोधाद-

---

अब भावास्रवके स्वरूपका विशेष रीतिसे कथन करते हैं;—

गाथाभावार्थः—अब प्रथम जो भावास्रव है उसके मिथ्यात्व, अविरति, प्रमाद, योग और क्रोध आदि कषाय ऐसे पांच भेद जानने चाहिये; और मिथ्यात्व आदिके क्रमसे पांच, पांच, पन्द्रह, तीन और चार भेद समझने चाहिये। अर्थात् मिथ्यात्वके पांच भेद, अविरतिके पांच भेद, प्रमादके पन्द्रह भेद, योगके तीन भेद और क्रोध आदि कषायोंके चार भेद जानने ॥ ३० ॥

व्याख्यार्थः—मिच्छत्ताविरदिपमादजोगकोधादओ" मिथ्यात्व, अविरति, प्रमाद, योग तथा क्रोध आदि वक्ष्यमाण लक्षण तथा संख्यायुक्त भाव आस्रवके भेद हैं। इनमेंसे अन्तरंगमें जो वीतराग निज आत्मतत्त्वके अनुभवमें रुचि है उसके विषयमें विपरीत अभिनिवेश (आग्रह) का उत्पन्न करानेवाला तथा बाह्य विषयमें परसंबंधी शुद्ध आत्मतत्त्वसे आदि लेकर संपूर्ण द्रव्योंमें जो विपरीत अर्थात् उलटे आग्रहका उत्पन्न करानेवाला है, उसको मिथ्यात्व कहते हैं। तथा अभ्यन्तरमें निज परमात्माके स्वरूपकी भावनासे उत्पन्न जो परम सुखरूप अमृत है, उस परम सुखमें जो रति (प्रीति) है उससे विलक्षण, तथा बाह्य विषयमें व्रत आदिका धारण न करने रूप जो है सो अविरति है। तथा अभ्यन्तरमें प्रमादरहित जो शुद्ध आत्मा है उसके अनुभवसे चलन (डिगाने) रूप और बाह्य विषयमें जो मूलगुण तथा उत्तर गुण हैं उनमें अतिचार उत्पन्न करनेवाला प्रमाद है। निश्चयसे क्रियारहित परमात्माके भी जो व्यवहारसे वीर्यान्तराय कर्मके क्षयोपशमसे उत्पन्न तथा मन, वचन और काय वर्गणाको अवलम्बन करनेवाला, कर्मोंके ग्रहण करनेमें कारणभूत आत्माके प्रदेशोंका परिस्पन्द (संचलन) है उसको योग कहते हैं। तथा अभ्यन्तरमें परम उपशम मूर्त्तिवाला तथा केवलज्ञान आदि अनंत गुणोंरूप स्वभावका धारक

अथेत्युक्तलक्षणाः पञ्चास्रवाः "अथ" अथो "विण्णेया" विज्ञेया ज्ञातव्याः। कतिभेदास्ते "पण पण पणदस तिय चदु कमसो भेदा दु" पञ्चपञ्चपञ्चदशत्रिचतुर्भेदाः क्रमशो भवन्ति पुनः। तथाहि "एयंतबुद्धिदरसी विवरीओ बह्मतावसो विणओ। इंदो विय संसइदो मक्कडिओ चेव अण्णाणी। १।" इति गाथाकथितलक्षणं पञ्चविधं मिथ्यात्वम्। हिंसानृतस्तेयाब्रह्मपरिग्रहाकाङ्क्षारूपेणाविरतिरपि पञ्चविधा। अथवा मनःसहितपञ्चेन्द्रियप्रवृत्तिपृथिव्यादिषट्कायविराधनाभेदेन द्वादशविधा। "विकहा तहय कसाया इन्दियणिद्दा य तह य पणयो य। चदु चदु पणमेगेगं हुंति पमादा हु पण्णरसा। १।" इति गाथाकथितक्रमेण पञ्चदश प्रमादाः। मनोवचनकायव्यापारभेदेन त्रिविधो योगः, विस्तरेण पञ्चदशभेदो वा। क्रोधमानमायालोभभेदेन कषायाश्चत्वारः, कषायनोकषायभेदेन पञ्चविंशतिविधा वा। एते सर्वे भेदाः कस्य संबन्धिनः "पुव्वस्स" पूर्वसूत्रोदितभावास्रवस्येत्यर्थः ॥ ३० ॥

अथ द्रव्यास्रवस्वरूपमुद्योतयतिः—

णाणावरणादीणं जोग्गं जं पुग्गलं समासवदि।
दव्वासवो स णेओ अणेयभेओ जिणक्खादो ॥ ३१ ॥

---

जो परमात्मा का स्वरूप है उसमें क्षोभको उत्पन्न करनेवाले तथा बाह्य विषयमें परके संबंधीपनेसे क्रूरता आदिके आवेश रूप जो क्रोध आदि हैं उनको कषाय कहते हैं। इस प्रकार पूर्वोक्त लक्षणके धारक मिथ्यात्व, अविरति, प्रमाद, योग तथा कषाय ये पांच भावास्रव हैं। ये "अथ" पूर्वकथनके अर्थात् २९ वीं गाथामें कहे हुए कथनके पश्चात् "विण्णेया" जानने चाहिये। अब इन पांच भावास्रवोंके कितने भेद हैं सो कहते हैं—"पण पण पणदस तिय चदु कमसो भेदा दु" और उन मिथ्यात्व आदिके क्रमसे पांच, पांच, पन्द्रह, तीन और चार भेद हैं। वे इस प्रकार हैं "बौद्धमतवाले आदि एकान्तमिथ्यात्वी हैं १. यज्ञ करनेवाले ब्राह्मण आदि विपरीतमिथ्यात्वके धारक हैं २. तापस आदि विनयमिथ्यात्वी हैं ३. इन्द्राचार्य आदि संशयमिथ्यात्वी हैं ४. और मस्करी आदि अज्ञानमिथ्यात्वी हैं ५." हिंसा, असत्य, चोरी, अब्रह्म और परिग्रहमें इच्छारूप अविरति भी पांच प्रकारकी है, अथवा यही अविरति मन और पांचों इन्द्रियोंकी प्रवृत्तिरूप ६ भेद तथा छहकायके जीवोंकी विराधनारूप ६ भेद ऐसे दोनोंके मिलानेसे बारह प्रकारकी भी है। "चार विकथा, चार कषाय, पांच इन्द्रिय, निद्रा और राग ऐसे पन्द्रह प्रमाद होते हैं॥ १॥" इस गाथाकथित क्रमसे प्रमाद पन्द्रह हैं। मनोव्यापार, वचनव्यापार और कायव्यापार इन भेदोंसे योग तीन प्रकारका है अथवा विस्तारसे १५ प्रकारका है। क्रोध, मान, माया तथा लोभ इन भेदोंसे कषाय चार प्रकारके हैं, अथवा १६ कषाय और ९ नोकषाय इन भेदोंसे पचीस प्रकारके कषाय हैं। ये सब भेद किस आस्रवके संबन्धी हैं कि "पुव्वस्स" पूर्वगाथामें कहा हुआ जो भावास्रव है उसके भेद हैं। इस प्रकार गाथाका अर्थ है ॥ ३० ॥

व्याख्या—"णाणावरणादीणं" सहजशुद्धकेवलज्ञानमभेदेन केवलज्ञानाद्यनन्तगुणाधारभूतं ज्ञानशब्दवाच्यं परमात्मानं वा आवृणोतीति ज्ञानावरणं, तदादिर्येषां तानि ज्ञानावरणादीनि तेषां ज्ञानावरणादीनां "जोग्गं" योग्यं "जं पुग्गलं समासवदि" स्नेहाभ्यक्तशरीराणां धूलिरेणुसमागम इव निष्कषायशुद्धात्मसंवित्तिच्युतजीवानां कर्मवर्गणारूपं यत्पुद्गलद्रव्यं समास्रवति "दव्वासओ स णेओ" द्रव्यास्रवः स विज्ञेयः। "अणेयभेओ" स च ज्ञानदर्शनावरणीयवेदनीयमोहनीयायुर्नामगोत्रान्तरायसंज्ञानामष्टमूलप्रकृतीनां भेदेन, तथैव "पण णव दु अट्ठवीसा चउ तियणवदी य दोण्णि पंचेव। बावण्णहीण वियसयपयडिविणासेण होंति ते सिद्धा ॥ १ ॥" इति गाथाकथितक्रमेणाष्टचत्वारिंशदधिकशतसंख्याप्रमितोत्तरप्रकृतिभेदेन तथा चासंख्येयलोकप्रमितपृथिवीकायनामकर्माद्युत्तरोत्तरप्रकृतिरूपेणानेकभेद इति "जिणक्खादो" जिनख्यातो जिनप्रणीत इत्यर्थः ॥ ३१ ॥ एवमास्रवव्याख्यानगाथात्रयेण प्रथमस्थलं गतम्।

---

अब द्रव्यास्रवके स्वरूपको प्रकट करते हैं;—

गाथाभावार्थः—ज्ञानावरण आदि आठ कर्मोंके योग्य जो पुद्गल आता है उसको द्रव्यास्रव जानना चाहिये। वह अनेक भेदोंसहित है, ऐसा श्रीजिनेन्द्रने कहा है ॥ ३१ ॥

व्याख्यार्थः—"णाणावरणादीणं" सहज शुद्ध केवल ज्ञानको अथवा अभेदनयकी विवक्षासे केवलज्ञान आदि अनन्त गुणोंका आधारभूत 'ज्ञान' इस शब्दसे कहने योग्य जो परमात्मा है उसको जो आवृत करे अर्थात् ढके सो ज्ञानावरण है। वह ज्ञानावरण है आदिमें जिनके ऐसे जो ज्ञानावरणादि हैं उनके "जोग्गं" योग "जं" जो "पुग्गलं" पुद्गल "समासवदि" आता है अर्थात् जैसे तैलसे लिप्त (चुपड़े हुए) शरीरवाले जीवोंके धूलके कणोंका आगमन होता है उसी प्रकार कषायरहित शुद्ध आत्माके ज्ञानसे रहित जीवोंके जो कर्मवर्गणारूप पुद्गल द्रव्य आता है "दव्वासओ स णेओ" उसको द्रव्यास्रव जानना चाहिये। "अणेयभेओ" और वह अनेक प्रकारका है अर्थात् ज्ञानावरणीय, दर्शनावरणीय, वेदनीय, मोहनीय, आयु, नाम, गोत्र तथा अन्तराय नामक जो आठ मूल प्रकृतिके भेद हैं उनसे, अथवा "ज्ञानावरणीयके ५, दर्शनावरणीयके ९, वेदनीयके २, मोहनीयके २८, आयुके ४, नामके ९३, गोत्रके २, और अन्तरायके ५ इस प्रकार बावन कम दोसौ (१४८) प्रकृतियोंका नाश होनेसे वे सिद्ध होते हैं।" इस गाथामें कहे हुए क्रमसे एकसौ अड़तालीस १४८ संख्या प्रमाण जो उत्तरप्रकृतियां हैं उनके भेदोंसे तथा असंख्यात लोक प्रमाण जो पृथिवी काय नाम कर्म आदि उत्तरोत्तर प्रकृतिभेद हैं उनसे अनेक प्रकारका है। "जिणक्खादो" यह द्रव्यास्रवका सूत्र श्रीजिनेन्द्रदेवका कहा हुआ है। इस प्रकार गाथाका अर्थ है ॥ ३१ ॥

इस पूर्वोक्त प्रकारसे आस्रवके व्याख्यानकी तीन गाथाओंसे प्रथम स्थल समाप्त हुआ।

अतःपरं सूत्रद्वयेन बन्धव्याख्यानं क्रियते। तत्रादौ गाथापूर्वार्धेन भावबन्धमुत्तरार्धेन तु द्रव्यबन्धस्वरूपमावेदयति;—

बज्झदि कम्मं जेण दु चेदणभावेण भावबंधो सो।
कम्मादपदेसाणं अण्णोण्णपवेसणं इदरो ॥३२॥

व्याख्या—"बज्झदि कम्मं जेण दु चेदणभावेण भावबंधो सो" बध्यते कर्म येन चेतनभावेन स भावबन्धो भवति। समस्तकर्मबन्धविध्वंसनसमर्थाखण्डैकप्रत्यक्षप्रतिभासमयपरमचैतन्यविलासलक्षणज्ञानगुणस्य, अभेदनयेनानन्तज्ञानादिगुणाधारभूतपरमात्मनो वा संबन्धिनी या तु निर्मलानुभूतिस्तद्विपक्षभूतेन मिथ्यात्वरागादिपरिणतिरूपेण वाऽशुद्धचेतनभावेन परिणामेन बध्यते ज्ञानावरणादि कर्म येन भावेन स भावबन्धो भण्यते। "कम्मादपदेसाणं अण्णोण्णपवेसणं इदरो" कर्मात्मप्रदेशानामन्योन्यप्रवेशनमितरः। तेनैव भावबन्धनिमित्तेन कर्मप्रदेशानामात्मप्रदेशानां च क्षीरनीरवदन्योन्यं प्रवेशनं संश्लेषो द्रव्यबन्ध इति ॥३२॥

अथ तस्यैव बन्धस्य गाथापूर्वार्धेन प्रकृतिबन्धादिभेदचतुष्टयं कथयति, उत्तरार्धेन तु प्रकृतिबन्धादीनां कारणं चेति ॥

---

अब इसके आगे दो गाथासूत्रोंसे बंध पदार्थका व्याख्यान करते हैं। उसमें प्रथम गाथाके पूर्वार्धसे भावबंध और उत्तरार्धसे द्रव्यबंधके स्वरूपका उपदेश करते हैं।

गाथाभावार्थः—जिस चेतनभावसे कर्म बँधता है वह तो भावबंध है, और कर्म तथा आत्माके प्रदेशोंका परस्पर प्रवेशन रूप अर्थात् कर्म और आत्माके प्रदेशोंका एकाकार होने रूप दूसरा द्रव्यबंध है ॥३२॥

व्याख्यार्थः—"बज्झदि कम्मं जेण दु चेदणभावेण भावबंधो सो" जिस चेतनके भावसे कर्म बँधता है, वह भावबंध है; अर्थात् संपूर्ण कर्मोंके बंधको नष्ट करनेमें समर्थ तथा अखण्ड (पूर्ण) एक प्रत्यक्ष ज्ञान स्वरूप जो परम चैतन्य विलास लक्षणका धारक ज्ञान गुण है, उससे अथवा अभेदनयकी विवक्षासे अनन्त ज्ञान आदि गुणोंका आधारभूत जो परमात्मा है उससे संबंध रखनेवाली जो निर्मल अनुभूति (अनुभव) है उससे विपक्षभूत (विरोधी) अथवा मिथ्यात्व, राग आदिमें परिणति रूप अशुद्ध चेतन भाव स्वरूप जो परिणाम है उससे जो कर्म बँधता है वह भावबंध कहलाता है। "कम्मादपदेसाणं अण्णोण्णपवेसणं इदरो" कर्म और आत्माके प्रदेशोंका परस्पर प्रवेशनरूप दूसरा है, अर्थात् उसी पूर्वोक्त भावबंधके निमित्तसे कर्मके प्रदेशोंका और आत्माके प्रदेशोंका जो दूध तथा जलकी भांति एक दूसरेमें प्रवेश होना अर्थात् मिल जाना है, सो द्रव्यबंध है ॥३२॥

अब गाथाके पूर्वार्धसे उसी बंधके प्रकृतिबंध आदि चार भेदोंको कहते हैं और उत्तरार्धसे उन प्रकृतिबंध आदिके कारणका कथन करते हैं।

पयडिट्ठिदिअणुभागपदेसभेदादु चदुविधो बंधो ।
जोगा पयडिपदेसा ठिदिअणुभागा कसायदो होंति ॥ ३३ ॥

व्याख्या । "पयडिट्ठिदिअणुभागपदेसभेदादु चदुविधो बंधो" प्रकृतिस्थित्यनुभागप्रदेशभेदाच्चतुर्विधो बन्धो भवति । तथाहि—ज्ञानावरणीयस्य कर्मणः का प्रकृतिः ? देवतामुखवस्त्रमिव ज्ञानप्रच्छादनता । दर्शनावरणीयस्य का प्रकृतिः ? राजदर्शनप्रतिषेधकप्रतीहारवद्दर्शनप्रच्छादनता । सातासातवेदनीयस्य का प्रकृतिः ? मधुलिप्तखड्गधारास्वादनवदल्पसुखबहुदुःखोत्पादकता । मोहनीयस्य का प्रकृतिः ? मद्यपानवद्धेयोपादेयविचारविकलता । आयुःकर्मणः का प्रकृतिः ? निगडवद्गत्यन्तरगमननिवारणता । नामकर्मणः का प्रकृतिः ? चित्रकारपुरुषवन्नानारूपकरणता । गोत्रकर्मणः का प्रकृतिः ? गुरुलघुभाजनकारककुम्भकारवदुच्चनीचगोत्रकरणता । अन्तरायकर्मणः का प्रकृतिः ? भाण्डागारिकवद्दानादिविघ्नकरणतेति । तथाचोक्तं—"पडपडिहारसिमज्जाहडिचित्तकुलालभंडयारीणं । जह एदेसिं भावा तहविह कम्मा मुणेयव्वा ॥ १ ॥" इति दृष्टान्ताष्टकेन प्रकृतिबन्धो

---

गाथाभावार्थः— प्रकृति, स्थिति, अनुभाग और प्रदेश इन भेदोंसे बंध चार प्रकारका है। इनमें योगोंसे प्रकृति तथा प्रदेशबंध होते हैं और कषायोंसे स्थिति तथा अनुभाग बंध होते हैं ॥ ३३ ॥

व्याख्यार्थः—"पयडिट्ठिदिअणुभागपदेसभेदादु चदुविधो बंधो" प्रकृतिबंध, स्थितिबंध, अनुभागबंध, और प्रदेशबंध इन भेदोंसे बंध चार ४ प्रकारका है। सो ही विशेषतासे दिखलाते हैं-ज्ञानावरणी कर्मकी प्रकृति ( स्वभाव ) क्या है, इस जिज्ञासामें उत्तर यह है कि जैसे देवताको मुखवस्त्र आवरण ( पड़दा ) आच्छादित कर लेता है अर्थात् ढक लेता है उसी प्रकार ज्ञानावरणी कर्म ज्ञानको ढक लेता है। दर्शनावरणीकी प्रकृति क्या है ? राजाके दर्शनकी रुकावट जैसे द्वारपाल करता है उसी प्रकार दर्शनावरणी दर्शनको नहीं होने देता है। सातावेदनी और असातावेदनी नामक दो भेदोंका धारक जो वेदनी कर्म है उसकी क्या प्रकृति है ? मधु ( शहद ) से लिपटी हुई तलवारकी धार चाटनेमें जैसे अल्प सुख और अधिक दुःख उत्पन्न होता है,वैसे ही वेदनी कर्म भी अल्प सुख और अधिक दुःखको देनेवाला है। मद्य ( मदिरा ) पानके समान हेय ( त्यागने योग्य ), उपादेय ( ग्रहण करने योग्य ) पदार्थके ज्ञानकी रहितता यह मोहनी कर्मकी प्रकृति है। बेड़ीके समान दूसरी गतिमें जानेको रोकना यह आयुःकर्मकी प्रकृति है। चित्रकार ( चितेरा ) पुरुषके तुल्य नानाप्रकारके रूपका करना यह नामकर्मकी प्रकृति है। छोटे बड़े भाजन ( घट आदि ) को करनेवाले कुंभारकी भांति उच्च तथा नीच गोत्रको करना यह गोत्र कर्मकी प्रकृति है। भंडारीके समान दान आदिमें विघ्न करना यह अन्तराय कर्मकी प्रकृति है। सो ही कहा है—"पट ( वस्त्र ), प्रतीहार ( द्वारपाल ), तलवार, मद्य, बेड़ी, चितेरा,कुम्भकार और भंडारी इन आठोंका जैसा स्वभाव है वैसा ही क्रमसे ज्ञानावरण आदि

ज्ञातव्यः ॥ अजागोमहिष्यादिदुग्धानां प्रहरद्वयादिस्वकीयमधुररसावस्थानपर्यन्तं यथा स्थितिर्भण्यते तथा जीवप्रदेशेष्वपि यावत्कालं कर्मसंबन्धेन स्थितिस्तावत्कालं स्थितिबन्धो ज्ञातव्यः । यथा च तेषामेव दुग्धानां तारतम्येन रसगतशक्तिविशेषोऽनुभागो भण्यते तथा जीवप्रदेशस्थितकर्मस्कन्धानामपि सुखदुःखदानसमर्थशक्तिविशेषोऽनुभागबन्धो विज्ञेयः । सा च घातिकर्मसम्बन्धिनी शक्तिर्लतादार्वस्थिपाषाणभेदेन चतुर्धा । तथैवाशुभाऽघातिकर्मसंबन्धिनी निम्बकाञ्जीरविषहालाहलरूपेण । शुभाघातिकर्मसंबन्धिनी पुनर्गुडखण्डशर्करामृतरूपेण चतुर्धा भवति । एकैकात्मप्रदेशे सिद्धानन्तैकभागसंख्या अभव्यानन्तगुणप्रमिता अनन्तानन्तपरमाणवः प्रतिक्षणबन्धमायान्तीति प्रदेशबन्धः ॥ इदानीं बन्धकारणं कथ्यते । "जोगा पयडिपदेसा ठिदिअणुभागा कसायदो हुंति ।" योगात्प्रकृतिप्रदेशौ, स्थित्यनुभागौ कषायतो भवत इति । तथाहि—निश्चयेन निष्क्रियाणामपि शुद्धात्मप्रदेशानां व्यवहारेण परिस्पन्दनहेतुर्योगः, तस्मात्प्रकृतिप्रदेशबन्धद्वयं भवति ।

---

आठों कर्मोंका स्वभाव है ॥ १ ॥" इस प्रकार गाथामें कहे हुए आठ दृष्टान्तोंके अनुसार प्रकृति बंध जानना चाहिये ॥ तात्पर्य यह कि कर्मपुद्गलोंका ज्ञानावरण आदि शक्ति सहित हो जाना ही प्रकृतिबंध है । तथा बकरी, गौ, महिषी ( भैंस ) आदिके दुग्धोंमें जैसे दो प्रहर आदि अपने मधुर रसमें रहनेकी स्थिति कही जाती है । अर्थात् बकरीका दूध दो प्रहर तक अपने मधुर रसमें स्थित रहता है, इत्यादि स्थितिका कथन है उसी प्रकार जीवके प्रदेशोंमें जितने काल पर्यन्त कर्मसंबंधसे स्थिति है उतने कालको स्थितिबन्ध जानना चाहिये । और जैसे उन पूर्वोक्त बकरी आदिके दूधोंमें तारतम्यसे ( न्यूनाधिकतासे ) मधुर-रसमें प्राप्त शक्तिविशेषरूप अनुभाग कहा जाता है उसी प्रकार जीवके प्रदेशोंमें स्थित जो कर्मोंके प्रदेश हैं उनके जो सुख तथा दुःख देनेमें समर्थ शक्तिविशेष है उसको अनुभाग बन्ध जानना चाहिये । और वह घाति कर्मसे संबन्ध रखनेवाली शक्ति लता ( वेल ), काष्ठ, हाड़ और पाषाण भेदसे चार प्रकारकी है, इसी प्रकार अशुभ अघातिया कर्मों संबंधिनी शक्ति निंब, कांजीर ( काली जीरी ), विष तथा हालाहल रूपसे चार प्रकारकी है । और शुभ अघातिया कर्मों संबंधी शक्ति गुड़,खांड, मिश्री तथा अमृत इन भेदोंसे चार तरहकी है । एक एक आत्माके प्रदेशमें सिद्धोंसे अनन्तैकभाग ( अनन्तमेंसे एक भाग ) संख्याके धारक और अभव्यराशिसे अनन्तगुणे परिमाणके धारक ऐसे अनन्तानन्त परमाणु प्रत्येक क्षणमें बंधको प्राप्त होते हैं । इस प्रकार प्रदेशबंधका स्वरूप है । अब बंधके कारणको कहते हैं—"जोगा पयडिपदेसा ठिदिअणुभागा कसायदो हुंति" योगसे प्रकृति तथा प्रदेशबन्ध होते हैं और स्थिति तथा अनुभाग ये दो बन्ध कषायोंसे होते हैं । इसका स्पष्टीकरण यह है कि, निश्चयनयसे जो क्रियारहित भी शुद्ध आत्माके प्रदेश हैं उनका व्यवहारसे जो परिस्पंदन ( चलायमान करनेका ) कारण है उसको योग कहते हैं । उस योगसे प्रकृति तथा प्रदेश नामक जो बंध होते हैं । और दोषरहित जो परमात्मा है, उसकी भावना

निर्दोषपरमात्मभावनाप्रतिबन्धकक्रोधादिकषायोदयात् स्थित्यनुभागबन्धद्वयं भवतीति आस्रवे बन्धे च मिथ्यात्वाविरत्यादिकारणानि समानानि को विशेष इति चेत्, नैवं—प्रथमक्षणे कर्मस्कन्धानामागमनमास्रवः, आगमनानन्तरं द्वितीयक्षणादौ जीवप्रदेशेष्ववस्थानं बन्ध इति भेदः। यत एव योगकषायाद्बन्धचतुष्टयं भवति तत एव बन्धविनाशार्थं योगकषायत्यागेन निजशुद्धात्मनि भावना कर्त्तव्येति तात्पर्यम् ॥ ३३ ॥ एवं बन्धव्याख्यानेन सूत्रद्वयेन द्वितीयं स्थलं गतम् ॥

अत ऊर्ध्वं गाथाद्वयेन संवरपदार्थः कथ्यते। तत्र प्रथमगाथायां भावसंवरद्रव्यसंवरस्वरूपं निरूपयति;—

चेदणपरिणामो जो कम्मस्सासवणिरोहणे हेदू।
सो भावसंवरो खलु दव्वासवरोहणे अण्णो ॥३४॥

व्याख्या—"चेदणपरिणामो जो कम्मस्सासवणिरोहणे हेदू सो भावसंवरो खलु" चेतनपरिणामो यः कथंभूतः कर्मास्रवनिरोधने हेतुः स भावसंवरो भवति, खलु निश्चयेन। "दव्वासवरोहणे अण्णो" द्रव्यकर्मास्रवनिरोधने सत्यन्यो द्रव्यसंवर इति।

---

(ध्यान) के प्रतिबंधक (रोकनेवाले) जो क्रोध आदि कषाय हैं उनके उदयसे स्थिति और अनुभाग ये दो बंध होते हैं। कदाचित्-आस्रव और बंधके होनेमें मिथ्यात्व, अविरति, आदि कारण समान हैं। इसलिये आस्रव और बंधमें क्या भेद है ? ऐसी शंका करो तो वह ठीक नहीं है। क्योंकि प्रथम क्षणमें जो कर्मस्कन्धोंका आगमन है, वह तो आस्रव है और कर्मस्कंधोंके आगमनके पीछे द्वितीय, तृतीय आदि क्षणोंमें जो उन कर्मस्कंधोंका जीवके प्रदेशोंमें स्थित होना है सो बंध है। यह भेद आस्रव और बंधमें है। जिस कारणसे कि योग और कषायोंसे प्रकृति, प्रदेश, स्थिति और अनुभाग नामक चार बंध होते हैं उसी कारणसे बंधका नाश करनेके अर्थ योग तथा कषायका त्याग करके अपने शुद्ध आत्मामें भावना करनी चाहिये। यह तात्पर्य है ॥ ३३ ॥

ऐसे बंधके व्याख्यान रूप जो दो गाथासूत्र हैं, उनके द्वारा द्वितीय अध्यायमें द्वितीय स्थल समाप्त हुआ।

अब इसके आगे दो गाथाओंसे संवर पदार्थका कथन करते हैं। उनमें प्रथम गाथामें भावसंवर और द्रव्यसंवर के स्वरूपका निरूपण करते हैं;—

गाथाभावार्थः—जो चेतनका परिणाम कर्मके आस्रवको रोकनेमें कारण है, उसको निश्चयसे भावसंवर कहते हैं। और जो द्रव्यास्रवको रोकनेमें कारण है सो दूसरा अर्थात् द्रव्यसंवर है ॥ ३४ ॥

व्याख्यार्थः—"चेदणपरिणामो जो कम्मस्सासवणिरोहणे हेदू सो भावसंवरो खलु" जो चेतनका परिणाम कर्मके आस्रवको रोकनेका कारण होता है, वह निश्चयसे भावसंवर है। "दव्वासवरोहणे अण्णो" द्रव्य कर्मोंके आस्रवका निरोध होनेपर दूसरा

तद्यथा—निश्चयेन स्वतः सिद्धत्वात्परकारणनिरपेक्षः, स चैवाविनश्वरत्वान्नित्यः परमोद्योतस्वभावत्वात्स्वपरप्रकाशनसमर्थः, अनाद्यनन्तत्वादादिमध्यान्तमुक्तः, दृष्टश्रुतानुभूतभोगाकाङ्क्षारूपनिदानबन्धादिसमस्तरागादिविभावमलरहितत्वादत्यन्तनिर्मलः, परमचैतन्यविलासलक्षणत्वाच्चिदुच्छलननिर्भरः, स्वाभाविकपरमानन्दैकलक्षणत्वात्परमसुखमूर्तिः, निरास्रवसहजस्वभावत्वात्सर्वकर्मसंवरहेतुरित्युक्तलक्षणः परमात्मा तत्स्वभावेनोत्पन्नो योऽसौ शुद्धचेतनपरिणामः स भावसंवरो भवति। यस्तु भावसंवरात्कारणभूतादुत्पन्नः कार्यभूतो नवतरद्रव्यकर्मागमनाभावः स द्रव्यसंवर इत्यर्थः॥

अथ संवरविषयनयविभागः कथ्यते। तथाहि—मिथ्यादृष्ट्यादिक्षीणकषायपर्यन्तमुपर्युपरि मन्दत्वात्तारतम्येन तावदशुद्धनिश्चयो वर्त्तते। तस्य मध्ये पुनर्गुणस्थानभेदेन शुभाशुभशुद्धानुष्ठानरूपयोगत्रयव्यापारस्तिष्ठति। तदुच्यते—मिथ्यादृष्टिसासादनमिश्रगुणस्थानेषूपर्युपरिमन्दत्वेनाशुभोपयोगो वर्त्तते, ततोऽप्यसंयतसम्यग्दृष्टिश्रावकप्रमत्तसंयतेषु पारम्पर्येण शुद्धोपयोगसाधक उपर्युपरि तारतम्येन शुभोपयोगो वर्त्तते, तदनन्तरमप्रमत्तादिक्षीणकषायपर्यन्तं जघन्यमध्यमोत्कृष्टभेदेन विवक्षितैकदेशशुद्धनयरूपशुद्धोपयोगो

---

द्रव्यसंवर होता है। सो इस प्रकार है-निश्चयनयसे स्वयं सिद्ध होनेसे अन्य कारणकी अपेक्षासे शून्य, अविनाशी होनेसे नित्य, परम उद्योत (प्रकाश) स्वभाव होनेसे अपने और परके प्रकाशनेमें समर्थ, अनादि अनन्त होनेसे आदि मध्य और अन्तरहित, देखे सुने और अनुभवमें किये हुये जो भोग हैं उनकी आकांक्षा (चाह) रूप जो निदान बंध आदि समस्त रागादिक विभावमल उनसे रहित होनेके कारण अत्यन्त निर्मल, परम चैतन्यविलासरूप लक्षणका धारक होनेसे चित् चमत्कार (चिन्मय) स्वरूप, स्वाभाविक परमानन्द स्वरूप होनेसे परम सुखकी मूर्त्तिका धारक और आस्रवरहित सहज स्वभाव होनेसे सब कर्मोंके संवर (रोकने) में कारण, इस प्रकार पूर्वोक्त लक्षणोंका धारक जो परमात्मा है उसके स्वभावसे उत्पन्न जो यह शुद्ध चेतन परिणाम है सो भावसंवर है। और कारणभूत भावसंवरसे उत्पन्न हुआ जो कार्यरूप नवीन द्रव्य कर्मोंके आगमनका अभाव है सो द्रव्य संवर है। इस प्रकार गाथार्थ है।

अब संवरके विषयमें नयोंका विभाग कहते हैं। सो इस प्रकार है कि-मिथ्यात्वगुणस्थानको आदि लेकर क्षीणकषाय नामक बारहवें गुणस्थान पर्यन्त ऊपर ऊपर मन्दतासे तारतम्यसे अशुद्ध निश्चय वर्त्तता है। और उसके मध्यमें गुणस्थानोंके भेदसे शुभ, अशुभ और शुद्ध अनुष्ठान रूप तीन योगोंका व्यापार रहता है। सो कहते हैं-मिथ्यादृष्टि, सासादन और मिश्र इन तीनों गुणस्थानोंमें ऊपर २ मन्दतासे अशुभ उपयोग रहता है; अर्थात् जो अशुभोपयोग प्रथम गुणस्थानमें है, उससे कम दूसरेमें और दूसरेसे अल्प तीसरेमें है। उसके आगे असंयत सम्यग्दृष्टि, श्रावक और प्रमत्त नामक जो तीन गुणस्थान हैं इनमें परम्परासे शुद्ध उपयोगका साधक ऊपर २ तारतम्यसे शुभ उपयोग प्रवर्त्तता है।

वर्तते, तत्रैवं, मिथ्यादृष्टिगुणस्थाने संवरो नास्ति, सासादनादिगुणस्थानेषु "सोलसपणवीसणभं दसच उछक्केकबंधवोछिण्णा। दुगतीसचदुरपुव्वे पणसोलस जोगिणो एक्को ।१।" इति बन्धविच्छेदत्रिभङ्गीकथितक्रमेणोपर्युपरि प्रकर्षेण संवरो ज्ञातव्य इति। अशुद्धनिश्चयमध्ये मिथ्यादृष्ट्यादिगुणस्थानेषूपयोगत्रयं व्याख्यातं, तत्राशुद्धनिश्चये शुद्धोपयोगः कथं घटत इति चेत्तत्रोत्तरं—शुद्धोपयोगे शुद्धबुद्धैकस्वभावो निजात्मा ध्येयस्तिष्ठति तेन कारणेन शुद्धध्येयत्वाच्छुद्धावलम्बनत्वाच्छुद्धात्मस्वरूपसाधकत्वाच्च शुद्धोपयोगो घटते। स च संवरशब्दवाच्यः शुद्धोपयोगः संसारकारणभूतमिथ्यात्वरागाद्यशुद्धपर्यायवदशुद्धो न भवति तथैव फलभूतकेवलज्ञानलक्षणशुद्धपर्यायवत् शुद्धोऽपि न भवति किन्तु ताभ्यामशुद्धशुद्धपर्यायाभ्यां विलक्षणं शुद्धात्मानुभूतिरूपनिश्चयरत्नत्रयात्मकं मोक्षकारणमेकदेशव्यक्तिरूपमेकदेशनिरावरणं च तृतीयमवस्थान्तरं भण्यते।

कश्चिदाह—केवलज्ञानं सकलनिरावरणं शुद्धं तस्य कारणेनापि सकलनिरावरणेन

---

इनके पश्चात् अप्रमत्त आदि क्षीणकषाय पर्यन्त गुणस्थानोंमें जघन्य, मध्यम, उत्कृष्ट भेदसे विवक्षित एकदेश शुद्ध नयरूप शुद्ध उपयोग वर्त्तता है। इनमें व्यवस्था इस प्रकार है कि—मिथ्यादृष्टि नामक प्रथम गुणस्थानमें तो संवर है ही नहीं और सासादन आदि गुणस्थानोंमें "सोलसपणवीसणभं दस चउछक्केक्क बंधवोछिण्णा। दुगतीस चदुरपुव्वे पणसोलह जोगिणो एक्को। १।" इस प्रकार बंधविच्छेद त्रिभंगीमें कहे हुए क्रमके अनुसार ऊपर २ अधिकतासे संवर जानना चाहिये। ऐसे अशुद्ध निश्चयनयके मध्यमें मिथ्यादृष्टि आदि गुणस्थानोंमें अशुभ, शुभ और शुद्धरूप तीनों उपयोगोंका व्याख्यान किया। इस अशुद्ध निश्चयमें शुद्ध उपयोग किस प्रकार सिद्ध हो सकता है ऐसा प्रश्न करो तो उसमें उत्तर यह है कि शुद्ध उपयोगमें शुद्ध बुद्ध एक स्वभावका धारक जो निज आत्मा है सो ध्येय होता है; इस कारण शुद्ध ध्येय (ध्यान करने योग्य पदार्थ) होनेसे शुद्ध अवलम्बन (आधार) पानेसे तथा शुद्ध आत्मस्वरूपका साधक होनेसे शुद्धोपयोग सिद्ध होता है। और वह 'संवर' इस शब्दसे कहे जाने योग्य जो शुद्धोपयोग है सो संसारके कारणभूत जो मिथ्यात्व, राग आदि अशुद्ध पर्याय हैं उनकी सी तरह अशुद्ध नहीं होता है और इसी प्रकार फलभूत जो केवलज्ञान स्वरूप शुद्ध पर्याय है उसकी भांति शुद्ध भी नहीं होता है; किन्तु उन अशुद्ध तथा शुद्ध दोनों पर्यायोंसे विलक्षण, शुद्ध आत्माके अनुभवस्वरूप निश्चय रत्नत्रयरूप, मोक्षका कारण, एक देशमें व्यक्तिरूप (प्रकटरूप) और एक देशमें आवरणरहित ऐसा तृतीय अवस्थान्तररूप कहा जाता है।

अब यहां कोई शंका करता है कि केवलज्ञान समस्त आवरणोंसे रहित और शुद्ध है इसलिये केवलज्ञानका कारण भी समस्त आवरणों रहित तथा शुद्ध होना चाहिये। क्योंकि, उपादान कारणके समान कार्य होता है ऐसा वचन है। अब इस शंकाका उत्तर

शुद्धेन भाव्यम्, उपादानकारणसदृशं कार्यं भवतीति वचनात् । तत्रोत्तरं दीयते-युक्तमुक्तं भवता परं किन्तूपादानकारणमपि षोडशवर्णिकासुवर्णकार्यस्याधस्तनवर्णिकोपादानकारणवत्, मृन्मयकलशकार्यस्य मृत्पिण्डस्थासकोशकुशूलोपादानकारणवदिति च कार्यादेकदेशेन भिन्नं भवति । यदि पुनरेकान्तेनोपादानकारणस्य कार्येण सहाभेदो भेदो वा भवति तर्हि पूर्वोक्तसुवर्णमृत्तिकादृष्टान्तद्वयवत्कार्यकारणभावो न घटते । ततः किं सिद्धं—एकदेशेन निरावरणत्वेन क्षायोपशमिकज्ञानलक्षणमेकदेशव्यक्तिरूपं विवक्षितैकदेशे शुद्धनयेन संवरशब्दवाच्यं शुद्धोपयोगस्वरूपं मुक्तिकारणं भवति । यच्च लब्ध्यपर्याप्तसूक्ष्मनिगोदजीवे नित्योद्‌घाटं निरावरणं ज्ञानं श्रूयते तदपि सूक्ष्मनिगोदसर्वजघन्यक्षयोपशमापेक्षया निरावरणं न च सर्वथा । कस्मादिति चेत्—तदावरणे जीवाभावः प्राप्नोति । वस्तुत उपरितनक्षायोपशमिकज्ञानापेक्षया केवलज्ञानापेक्षया च तदपि सावरणं संसारिणां क्षायिकज्ञानाभावाच्च क्षयोपशमिकमेव । यदि पुनर्लोचनपटलस्यैकदेशनिरावरणवत्केवलज्ञानांश-

---

दिया जाता है कि आपने ठीक कहा परन्तु उपादान कारण भी सोलह वानीके सुवर्णरूप कार्यके अधोभागवर्तिनी ( पूर्ववर्त्तिनी ) वर्णिकारूप उपादान कारणके समान और मृत्तिकारूप कलशकार्यके प्रति मृत्तिकाका पिण्ड, स्थास, कोश, एवं कुशूलरूप उपादान कारणके सदृश कार्यसे एक देशसे भिन्न होता है अर्थात् सोलह वानीके सोनेके प्रति जैसे पहलेकी सब पन्दरह वर्णिकायें उपादान कारण हैं और घटके प्रति जैसे मृत्तिकापिंड, स्थास, कोश, कुसूल आदि उपादान कारण हैं सो सोलह वानीके सुवर्ण और घटरूप कार्यसे एकदेशभिन्न हैं ( सर्वथा सोलह वानीके सुवर्णस्वरूप तथा घटरूप नहीं है ) इसी प्रकार समस्त उपादान कारण कार्यसे एकदेश भिन्न होते हैं । और यदि सर्वथा उपादानकारणका कार्यके साथ अभेद हो तो पूर्वोक्त जो सुवर्ण और मृत्तिकाके दो दृष्टान्त हैं उनके समान कार्य और कारणभाव ही नहीं सिद्ध हो अर्थात् सोलह वानीके सुवर्णको ही सोलह वानीके सुवर्णरूप कार्यके प्रति उपादान कारण माना जावे अथवा घटको ही घटके प्रति उपादान कारण मानें तो यह इसका कारण है यह इसका कार्य है इस प्रकारका कार्य कारणभाव नहीं हो सकता । इस कारण क्या सिद्ध हुआ कि एकदेश निरावरणतासे क्षयोपशमिक ज्ञानरूप लक्षणका धारक एकदेश व्यक्तिरूप और विवक्षित एक देशमें शुद्ध नयसे "संवर" इस शब्दसे वाच्य जो शुद्ध उपयोगका स्वरूप है सो मुक्तिका कारण होता है । और जो लब्धि अपर्याप्त सूक्ष्म निगोद जीवमें नित्य उद्घाट ( खुला हुआ ) तथा आवरणरहित ज्ञान सुना जाता है वह भी सूक्ष्म निगोदमें सर्व जघन्य जो क्षयोपशम है उसकी अपेक्षासे आवरणरहित है, सर्वथा नहीं । ऐसा क्यों है ? इसका उत्तर यह है कि यदि ज्ञानका आवरण हो हो तो जीवका अभाव प्राप्त होता है । यथार्थमें तो उपरिवर्त्ती क्षायोपशमिक ज्ञानको अपेक्षासे और केवल ज्ञानकी अपेक्षासे वह ज्ञान भी आवरणसहित है और संसारी जीवोंके क्षायिक ज्ञानका अभाव है

रूपं भवति तर्हि तेनैकदेशेनापि लोकालोकप्रत्यक्षतां प्राप्नोति न च तथा दृश्यते। किन्तु प्रचुरमेघप्रच्छादितादित्यबिम्बवन्निविडलोचनपटलवद्वा स्तोकं प्रकाशयतीत्यर्थः ॥

अथ क्षयोपशमलक्षणं कथ्यते—सर्वप्रकारेणात्मगुणप्रच्छादिकाः कर्मशक्तयः सर्वघातिस्पर्द्धकानि भण्यन्ते, विवक्षितैकदेशेनात्मगुणप्रच्छादिकाः शक्तयो देशघातिस्पर्द्धकानि भण्यन्ते, सर्वघातिस्पर्द्धकानामुदयाभाव एव क्षयस्तेषामेवास्तित्वमुपशम उच्यते, सर्वघात्युदयाभावलक्षणक्षयेण सहित उपशमः, तेषामेकदेशघातिस्पर्द्धकानामुदयश्चेति समुदायेन क्षयोपशमो भण्यते। क्षयोपशमे भवः क्षायोपशमिको भावः। अथवा देशघातिस्पर्द्धकोदये सति जीव एकदेशेन ज्ञानादिगुणं लभते यत्र स क्षायोपशमिको भावः। तेन किं सिद्धं—पूर्वोक्तसूक्ष्मनिगोदजीवे ज्ञानावरणीयदेशघातिस्पर्द्धकोदये सत्येकदेशेन ज्ञानगुणं लभ्यते, तेन कारणेन तत् क्षायोपशमिकं ज्ञानं न च क्षायिकं कस्मादेकदेशोदयसद्भावादिति। अयमत्रार्थः—यद्यपि पूर्वोक्तं शुद्धोपयोगलक्षणं क्षायोपशमिकं ज्ञानं मुक्तिकारणं भवति तथापि ध्यातृपुरुषेण यदेव सकलनिरावरणमखण्डैकसकलविमलकेव-

---

इसलिये क्षायोपशमिक ही है। और यदि नेत्रपटलके एकदेशमें निरावरणके तुल्य वह ज्ञान केवल ज्ञानांशरूप हो तो उस एकदेशसे भी लोक तथा अलोकका प्रत्यक्ष प्राप्त हो जाय अर्थात् लोक अलोक प्रत्यक्षमें जान पड़ें; परन्तु ऐसा नहीं देखा जाता, किन्तु अधिक मेघों (बद्लों) से आच्छादित सूर्यके बिम्बके समान अथवा निविड नेत्रपटलके समान वह किंचित् किंचित् प्रकाश करता है, यह तात्पर्य है ॥

अब क्षयोपशमका लक्षण कहते हैं-सब प्रकारसे आत्माके गुणोंको प्रच्छादन करनेवाली जो कर्मोंकी शक्तियां हैं उनको सर्वघातिस्पर्द्धक कहते हैं। और विवक्षित एकदेशसे जो आत्माके गुणोंको प्रच्छादन करनेवाली कर्मशक्तियां हैं वे देशघातिस्पर्द्धक कहलाती हैं। सर्वघातिस्पर्द्धकोंके उदयका जो अभाव है सो ही क्षय है और उन्हीं सर्वघातिस्पर्द्धकोंका जो अस्तित्व ( विद्यमानत्व ) है वह उपशम कहलाता है। सर्वघातिस्पर्द्धकोंके उदयका अभावरूप जो क्षय है उस सहित जो उन एकदेश घातिस्पर्द्धकोंका उदयरूप उपशम सो क्षयोपशम, ऐसे समुदायसे क्षयोपशम कहा जाता है। क्षयोपशममें जो हो वह क्षायोपशमिक भाव है। अथवा देशघातिस्पर्द्धकोंके उदयके भी होते हुये जीव जहांपर एकदेशसे ज्ञानादि गुण प्राप्त करता है वह क्षायोपशमिक भाव है। इससे क्या सिद्ध हुआ कि पूर्वोक्त सूक्ष्म निगोद जीवमें ज्ञानावरणीय कर्मके देशघातिस्पर्द्धकोंका उदय होनेपर एकदेशसे ज्ञान आदि गुण प्राप्त होते हैं इस कारण वह ज्ञान क्षायोपशमिक है और क्षायिक नहीं; क्योंकि, एकदेशमें उदयका सद्भाव है। यहांपर तात्पर्य यह है कि यद्यपि पूर्वोक्त शुद्धोपयोग लक्षणका धारक क्षायोपशमिक ज्ञान मुक्तिका कारण है तथापि ध्यान करनेवाले पुरुषको "जोही सकल आवरणों रहित, अखंड एक सकल विमल केवल ज्ञानरूप परमात्माका

ज्ञानलक्षणं परमात्मस्वरूपं तदेवाहं न च खण्डज्ञानरूप इति भावनीयम्। इति संवरतत्त्वव्याख्यानविषये नयविभागो ज्ञातव्य इति ॥ ३४॥

अथ संवरकारणभेदान् कथयतीत्येका पातनिका, द्वितीया तु कैः कृत्वा संवरो भवतीति पृष्टे प्रत्युत्तरं ददातीति पातनिकाद्वयं मनसि धृत्वा सूत्रमिदं प्रतिपादयति भगवान्—

वदसमिदीगुत्तीओ धम्माणुपेहा परीसहजओ य।
चारित्तं बहुभेया णायव्वा भावसंवरविसेसा ॥ ३५ ॥

व्याख्या। 'वदसमिदीगुत्तीओ' व्रतसमितिगुप्तयः "धम्माणुपेहा" धर्मस्तथैवानुप्रेक्षाः "परीसहजओ य" परीषहजयश्च "चारित्तं बहुभेया" चारित्रं बहुभेदयुक्तं "णायव्वा भावसंवरविसेसा" एते सर्वे मिलिता भावसंवरविशेषा भेदा ज्ञातव्याः। अथ विस्तरः—निश्चयेन विशुद्धज्ञानदर्शनस्वभावनिजात्मतत्त्वभावनोत्पन्नसुखसुधास्वादबलेन समस्तशुभाशुभरागादिविकल्पनिवृत्तिर्व्रतम्, व्यवहारेण तत्साधकं हिंसानृतस्तेयाब्रह्मपरिग्रहाच्च यावज्जीवनिवृत्तिलक्षणं पञ्चविधं व्रतम्। निश्चयेनानन्तज्ञानादिस्वभावे निजात्मनि सम्

---

स्वरूप है सोही मैं हूं और खंड ज्ञानरूप नहीं" ऐसा ध्यान करना चाहिये। इस प्रकार संवर तत्त्वके व्याख्यानके विषय में नयका विभाग जानना चाहिये ॥ ३४ ॥

अब संवरके कारणोंके भेद कहते हैं। यह तो एक भूमिका है और किनसे संवर होता है? इस प्रश्नमें उत्तर देनेवाली दूसरी भूमिका है। इन दोनों पातनिका (भूमिका)ओंको मनमें धारण करके, भगवान् श्रीनेमिचन्द्र स्वामी इस अग्रिम गाथासूत्रका प्रतिपादन करते हैं:—

**गाथाभावार्थः**—पांच व्रत, पांच समिति, तीन गुप्ति, दश धर्म, बारह अनुप्रेक्षा, बाईस परीषहोंका जय तथा अनेक प्रकारका चारित्र, इस प्रकार ये सब भावसंवर के भेद जानने चाहिये ॥

**व्याख्यार्थः**—"वदसमिदीगुत्तीओ" व्रत, समिति और गुप्तियाँ, "धम्माणुपेहा" धर्म तथा अनुप्रेक्षा "परीसहजओ य" और परीषहोंका जीतना "चारित्तं बहुभेया" अनेक प्रकारका चारित्र "णायव्वा भावसंवरविसेसा" ये सब मिले हुए भावसंवरके भेद जानने चाहिये। अब इस उक्त विषयका विस्तारसे वर्णन करते हैं—निश्चयनयसे विशुद्ध ज्ञान और दर्शनरूप स्वभावका धारक जो निज आत्मतत्त्व उसकी भावनासे उत्पन्न जो सुखरूपी अमृत उसके आस्वादके बलसे संपूर्ण शुभ तथा अशुभ राग आदि विकल्पोंसे जो रहित होना सो व्रत है, और व्यवहारसे उस निश्चय व्रतको साधनेवाला हिंसा, अनृत (झूठ), चोरी, अब्रह्म और परिग्रहसे जीवनपर्यन्त रहिततारूप लक्षणका धारक पांच प्रकारका व्रत है। निश्चयनयकी विवक्षासे अनन्त ज्ञान आदि स्वभावका धारक जो निज आत्मा है उसमें 'सम्' भले प्रकार अर्थात् समस्त राग आदि विभावोंके त्याग द्वारा आत्मामें लीन

सम्यक् समस्तरागादिविभावपरित्यागेन तल्लीनतच्चिन्तनतन्मयत्वेन अयनं गमनं परिणमनं समितिः, व्यवहारेण तद्बहिरङ्गसहकारिकारणभूताचारादिचरणग्रन्थोक्ता ईर्याभाषैषणादाननिक्षेपोत्सर्गसंज्ञाः पञ्च समितयः। निश्चयेन सहजशुद्धात्मभावनालक्षणे गूढस्थाने संसारकारणरागादिभयात्स्वस्यात्मनो गोपनं प्रच्छादनं झम्पनं प्रवेशनं रक्षणं गुप्तिः, व्यवहारेण बहिरङ्गसाधनार्थं मनोवचनकायव्यापारनिरोधो गुप्तिः। निश्चयेन संसारे पतन्तमात्मानं धरतीति विशुद्धज्ञानदर्शनलक्षणनिजशुद्धात्मभावनात्मको धर्मः, व्यवहारेण तत्साधनार्थं देवेन्द्रनरेन्द्रादिवन्द्यपदे धरतीत्युत्तमक्षमामार्दवार्जवसत्यशौचसंयमतपस्त्यागाकिञ्चन्यब्रह्मचर्यलक्षणो दशप्रकारो धर्मः।

द्वादशानुप्रेक्षाः कथ्यन्ते-अध्रुवाशरणसंसारैकत्वान्यत्वाशुचित्वास्रवसंवरनिर्जरालोकबोधिदुर्लभधर्मानुचिन्तनमनुप्रेक्षाः। ताश्च कथ्यन्ते। तद्यथा-द्रव्यार्थिकनयेन टङ्कोत्कीर्णज्ञायकैकस्वभावत्वेनाविनश्वरस्वभावनिजपरमात्मद्रव्यादन्यद् भिन्नं यज्जीवसंबन्धे अशुद्धनिश्चयनयेन रागादिविभावरूपं भावकर्म, अनुपचरितासद्भूतव्यवहारेण द्रव्यकर्मनोकर्मरूपं च तथैव तत्स्वस्वामिभावसम्बन्धेन गृहीतं यच्चेतनं वनितादिकम्, अचेतनं सुवर्णादिकं तदु-

---

होना, आत्माका ध्यान करना, आत्मरूप होना आदिरूपसे जो अयन कहिये गमन अर्थात् परिणमन सो समिति है। व्यवहारसे उस निश्चय समितिके बहिरंग सहकारी कारणभूत और आचार आदि चारित्र विषयक ग्रंथोंमें कही हुई ईर्या, भाषा, एषणा, आदाननिक्षेपणा, और उत्सर्ग इन नामोंकी धारक पांच समितियां हैं। निश्चयसे सहज शुद्ध आत्माकी भावनारूप लक्षणके धारक गूढ (गुप्त) स्थानमें संसारके कारणभूत जो रागादि हैं उनके भयसे अपने आत्माका जो गोपन (छिपाना) प्रच्छादन, झंपन, प्रवेशन अथवा रक्षण करना है सो गुप्ति है। व्यवहारसे बहिरंग साधनके अर्थ जो मन, वचन तथा कायके व्यापारको रोकना है, सो गुप्ति है। निश्चयसे संसारमें गिरते हुए आत्माको धारण करै सो विशुद्ध ज्ञान तथा दर्शन लक्षण निज शुद्ध आत्माकी भावनास्वरूप धर्म है। व्यवहारसे उसके साधनके लिये इन्द्र, चक्रवर्ती आदिका जो वंदने योग्य पद है उसमें धारण करनेवाला उत्तम क्षमा, मार्दव, आर्जव, सत्य, शौच, संयम, तप, त्याग, आकिंचन्य तथा ब्रह्मचर्यरूप लक्षणका धारक दश प्रकार धर्म है।

अब बारह अनुप्रेक्षाओंका कथन करते हैं—अध्रुव, अशरण, संसार, एकत्व, अन्यत्व, अशुचित्व, आस्रव, संवर, निर्जरा, लोक, बोधिदुर्लभ और धर्म इनका जो विचार करना है सो अनुप्रेक्षा है। उनको कहते हैं। सो ऐसे हैं-द्रव्यार्थिक नयसे टंकोत्कीर्ण ज्ञायक एक स्वभावपनेसे अविनाशी स्वभावका धारक जो निज परमात्मा द्रव्य है उससे भिन्न जो अशुद्ध निश्चयनयसे रागादि विभावरूप भावकर्म और अनुपचरित असद्भूत व्यवहारसे द्रव्यकर्म तथा नोकर्मरूप, तथा उसके स्वस्वामिभावसंबंधसे ग्रहण किया हुआ स्त्री आदि चेतन द्रव्य, सुवर्ण आदि अचेतन द्रव्य और चेतन तथा अचेतनसे मिला हुआ मिश्र

भयमिश्रं चेत्युक्तलक्षणं तत्सर्वमध्रुवमिति भावयितव्यम् । तद्भावनासहितपुरुषस्य तेषां वियोगेऽपि सत्युच्छिष्टेष्विव ममत्वं न भवति तत्र ममत्वाभावादविनश्वरनिजपरमात्मानमेव भेदाभेदरत्नत्रयभावनया भावयति, यादृशमविनश्वरमात्मानं भावयति तादृशमेवाक्षयानन्तसुखस्वभावं मुक्तात्मानं प्राप्नोति । इत्यध्रुवानुप्रेक्षा गता ।

अथ निश्चयरत्नत्रयपरिणतं स्वशुद्धात्मद्रव्यं तद्बहिरङ्गसहकारिकारणभूतं पञ्चपरमेष्ठ्याराधनञ्च शरणम्, तस्माद्बहिर्भूता ये देवेन्द्रचक्रवर्त्तिसुभटकोटिभटपुत्रादिचेतना गिरिदुर्गभूविवरमणिमन्त्राज्ञाप्रसादौषधादयः पुनरचेतनास्तदुभयात्मका मिश्राश्च मरणकालादौ महाटव्यां व्याघ्रगृहीतमृगबालस्येव महासमुद्रे पोतच्युतपक्षिण इव शरणं न भवन्तीति विज्ञेयम् । तद्विज्ञाय भोगाकाङ्क्षारूपनिदानबन्धादिनिरालम्बेन स्वसंवित्तिसमुत्पन्नसुखामृतसालम्बने स्वशुद्धात्मन्येवावलम्बनं कृत्वा भावनां करोति । यादृशं शरणभूतमात्मानं भावयति तादृशमेव सर्वकालशरणभूतं शरणागतवज्रपञ्जरसदृशं निजशुद्धात्मानं प्राप्नोति । इत्यशरणानुप्रेक्षा व्याख्याता ॥

---

पदार्थ इस प्रकार पूर्वोक्त लक्षणोंसहित जो ये हैं सो सब अध्रुव हैं, इस प्रकार भावना चाहिये। उस भावनासहित जो पुरुष है उसके उनके वियोग होनेपर भी उच्छिष्ट (जूँठे) भोजनोंके समान ममत्व नहीं होता है। और उनमें ममत्वका अभाव होनेसे अविनाशी निज परमात्माको ही भेद तथा अभेदरूप रत्नत्रयकी भावनासे भावन करता (भावता) है और जैसे अविनश्वर आत्माको भावता है, वैसे ही अक्षय अनन्त सुखरूप स्वभावका धारक जो मुक्त आत्मा है उसको प्राप्त होता है। इस प्रकार अध्रुव भावना पूर्ण हुई।

अब अशरण अनुप्रेक्षाका वर्णन करते हैं। निश्चयरत्नत्रयमें परिणत जो निजशुद्धात्मद्रव्य है सो और उसका बहिरंग सहकारी कारणभूत जो पंचपरमेष्ठियोंका आराधन है सो शरण है। उससे बहिर्भूत ( भिन्न ) जो देव, इन्द्र, चक्रवर्त्ती, सुभट, कोटिभट और पुत्र आदि चेतन, पर्वत, किला, भूविवर ( भोंहरा ), मणि, मन्त्र, आज्ञा, प्रसाद और औषध आदि अचेतन तथा चेतन और अचेतन इन दोनोंसे मिश्र, ये सब पदार्थ मरण आदिके समयमें जैसे महावनमें व्याघ्रसे पकड़े हुए हिरणके बच्चेको अथवा महासमुद्रमें जहाजसे च्युत ( रहित ) हुए पक्षीको कोई शरण नहीं है, उसी प्रकार शरण नहीं होते हैं, यह जानना चाहिये। और अन्य वस्तुको अपना शरण न जानकर, भोगको वांछारूप निदानबंध आदिकके अवलम्बन ( आधार )से रहित तथा स्व ( आत्म ) ज्ञानसे उत्पन्न सुखरूप अमृतका धारक जो निजशुद्ध आत्मा है, उसीका अवलंबन करके, उसकी भावनाको करता है। और जैसे आत्माको यह शरणभूत भावता है, वैसेही सब कालमें शरणभूत और शरणमें आये हुएके अर्थ वज्रके पींजरेके समान जो निजशुद्ध आत्मा है, उसको प्राप्त होता है। इस प्रकार द्वितीय अशरण अनुप्रेक्षाका व्याख्यान हुआ॥

अथ शुद्धात्मद्रव्यादितराणि सपूर्वापूर्वमिश्रपुद्गलद्रव्याणि ज्ञानावरणादिद्रव्यकर्मरूपेण शरीरपोषणार्थाशनपानादिपञ्चेन्द्रियविषयरूपेण चानन्तवारान् गृहीत्वा विमुक्तानीति द्रव्यसंसारः । स्वशुद्धात्मद्रव्यसंबन्धिसहजशुद्धलोकाकाशप्रमितासंख्येयप्रदेशेभ्यो भिन्ना ये लोकक्षेत्रप्रदेशास्तत्रैकैकं प्रदेशं व्याप्यानन्तवारान् यत्र न जातो न मृतोऽयं जीवः स कोऽपि प्रदेशो नास्तीति क्षेत्रसंसारः । शुद्धात्मानुभूतिरूपनिर्विकल्पसमाधिकालं विहाय प्रत्येकं दशकोटाकोटिसागरेण प्रमितोत्सर्पिण्यवसर्पिण्येकैकसमये नानापरावर्त्तनकालेनानन्तवारानयं जीवो यत्र न जातो न मृतः स समयो नास्तीति कालसंसारः । अभेदरत्नत्रयात्मकसमाधिबलेन सिद्धगतौ स्वात्मोपलब्धिलक्षणसिद्धपर्यायरूपेण योऽसावुत्पादो भवस्तं विहाय नारकतिर्यग्मनुष्यभवेषु तथैव देवभवेषु च निश्चयरत्नत्रयभावनारहितभोगाकाङ्क्षानिदानपूर्वकद्रव्यतपश्चरणरूपजिनदीक्षाबलेन नवग्रैवेयकपर्यन्तं "सक्को सक्कमहिस्सी दक्खिणइंदा य लोयवाला य । लोयंतिया य देवा तच्छ चुदा णिव्वुदिं जंति । १ ।" इति गाथाकथितपदानि तथागमनिषिद्धान्यपदानि च त्यक्त्वा भवविध्वंसकनि-

---

अब तृतीय संसारानुप्रेक्षाका वर्णन करते हैं । शुद्ध आत्मद्रव्यसे भिन्न जो सपूर्व, अपूर्व तथा मिश्र ऐसे पुद्गल द्रव्य हैं, उनको ज्ञानावरण आदि द्रव्यकर्म रूपसे तथा शरीरके पोषण के लिये भोजन पान आदि पांचों इन्द्रियोंके विषयरूप से इस जीवने अनन्त बार ग्रहण करके छोड़ा है । इस प्रकार द्रव्यसंसार है । निजशुद्ध आत्मारूप द्रव्यसंबंधी जो सहज शुद्ध लोकाकाश प्रमाण असंख्यात प्रदेश हैं, उनसे भिन्न जो लोकरूप क्षेत्रके प्रदेश हैं । उनमें, एक एक प्रदेशको व्याप्त करके, जिस प्रदेशमें अनंत बार यह जीव नहीं उत्पन्न हुआ हो और न मरा हो, वह कोई भी प्रदेश नहीं है । यह क्षेत्रसंसार है । निजशुद्ध आत्माके अनुभवरूप निर्विकल्प समाधि ( ध्यान )के समयको त्यागकर, दशकोटाकोटीसागर प्रमाण जो उत्सर्पिणी काल और दशकोटाकोटिसागर प्रमाण ही जो अवसर्पिणी काल है, उसके एक एक समयमें अनेक परावर्त्तन कालसें यह जीव यहांपर अनन्तबार न जन्मा हो और न मरा हो वह समय नहीं है । इस प्रकार कालसंसार है । अभेद रत्नत्रयस्वरूप ध्यानके बलसे सिद्धगतिमें निज आत्माकी प्राप्ति लक्षण सिद्ध पर्यायरूप जो उत्पाद ( जन्म ) है उसको त्यागकर नारक, तिर्यञ्च, मनुष्य और देवोंके भावोंमें निश्चयरत्नत्रयकी भावनासे रहित भोग वांछादि निदान सहित जो द्रव्यतपश्चरणरूप जिनदीक्षा ( मुनिपना ) है उसके बलसे नव ग्रैवेयक पर्यन्त "प्रथम स्वर्गका इन्द्र, प्रथम स्वर्गकी महा इन्द्राणी शची, दक्षिण दिशाके इन्द्र, लोकपाल और लौकान्तिक देव ये सब स्वर्गसे च्युत होकर निर्वृति ( मोक्ष )को प्राप्त होते हैं । १ ।" ऐसे गाथामें कहे हुए पूर्वोक्त पद तथा अन्य अन्य भी जो आगममें निषिद्ध ( मना किये हुए ) उत्तम पद हैं उनको छोड़कर, भवका नाश करनेवाली जो निज आत्माकी भावना है उससे रहित तथा भवको उत्पन्न करनेवाले मिथ्यात्व राग आदि जो भाव हैं उनसे रहित हुआ यह जीव

जशुद्धात्मभावनारहितो भवोत्पादकमिथ्यात्वरागादिभावनासहितश्च सन्नयं जीवोऽनन्तवारान् जीवितो मृतश्चेति भवसंसारो ज्ञातव्यः।

अथ भावसंसारः कथ्यते। तद्यथा—सर्वजघन्यप्रकृतिबन्धप्रदेशबन्धनिमित्तानि सर्वजघन्यमनोवचनकायपरिस्पन्दरूपाणि श्रेण्यसंख्येयभागप्रमितानि चतुःस्थानपतितानि सर्वजघन्ययोगस्थानानि भवन्ति। तथैव सर्वोत्कृष्टप्रकृतिबन्धप्रदेशबन्धनिमित्तानि सर्वोत्कृष्टमनोवचनकायव्यापाररूपाणि तद्योग्यश्रेण्यसंख्येयभागप्रमितानि चतुःस्थानपतितानि सर्वोत्कृष्टयोगस्थानानि च भवन्ति। तथैव सर्वजघन्यस्थितिबन्धनिमित्तानि सर्वजघन्यकषायाध्यवसायस्थानानि तद्योग्यासंख्येयलोकप्रमितानि षट्स्थानपतितानि च भवन्ति। तथैव च सर्वोत्कृष्टकषायाध्यवसायस्थानानि तान्यप्यसंख्येयलोकप्रमितानि षट्स्थानपतितानि च भवन्ति। तथैव सर्वजघन्यानुभागबन्धनिमित्तानि सर्वजघन्यानुभागाध्यवसायस्थानानि तान्यप्यसंख्येयलोकप्रमितानि षट्स्थानपतितानि भवन्ति। तथैव च सर्वोत्कृष्टानुभागबन्धनिमित्तानि सर्वोत्कृष्टानुभागाध्यवसायस्थानानि तान्यप्यसंख्येयलोकप्रमितानि षट्स्थानपतितानि च विज्ञेयानि। तेनैव प्रकारेण स्वकीयस्वकीयजघन्योत्कृष्टयोर्मध्ये तारतम्येन मध्यमानि च भवन्ति। तथैव जघन्यादुत्कृष्टपर्यन्तानि ज्ञानावरणादिमूलोत्तरप्रकृतीनां स्थितिबन्धस्थानानि च। तानि सर्वाणि परमागमकथितानुसारेणानन्तवारान्

---

अनन्तवार जन्मा है और मरा है। इस प्रकार यह पूर्वकथित भवसंसारका स्वरूप जानना चाहिये।

अब भाव संसारका कथन करते हैं। वह इस प्रकार है-सबसे जघन्य प्रकृति बंध तथा प्रदेश बंधके कारणभूत और उसके योग्य श्रेणीके असंख्येय भाग प्रमाण वृद्धि हानि रूप चार स्थानोंमें पतित जो सर्व जघन्य मन, वचन तथा कायके परिस्पन्द हैं; वे सर्वजघन्य योगस्थान होते हैं। इसी प्रकार सबसे अधिक प्रकृतिबंध तथा प्रदेशबंधके निमित्त, उनके योग्य श्रेणीके असंख्येय भाग प्रमाण चार स्थानोंमें पतित जो सर्वोत्कृष्ट मन, वचन और कायके व्यापार हैं, वे सर्वोत्कृष्ट योग स्थान होते हैं। इसी प्रकार सर्वजघन्य स्थिति बंधके कारण जो सर्वजघन्य कषायोंके अध्यवसाय स्थान हैं, वे भी उनके योग्य असंख्येय लोक प्रमाण तथा वृद्धिहानिरूप षट् स्थानोंमें पतित होते हैं। एवमेव जो सर्वोत्कृष्ट कषायोंके अध्यवसाय स्थान हैं, वे भी असंख्येय लोक प्रमाण और षट्स्थानोंमें पतित होते हैं। और इसी प्रकार सबसे जघन्य अनुभाग बंधके कारण जो सबसे जघन्य (निकृष्ट) अनुभागोंके अध्यवसाय स्थान हैं वे भी असंख्यात लोक प्रमाण तथा षट् स्थानोंमें पतित होते हैं। तथा इसी प्रकार सबसे उत्कृष्ट अनुभाग बंधके निमित्तभूत जो सर्वोत्कृष्ट अनुभागके अध्यवसाय स्थान हैं उनको भी असंख्यात लोक प्रमाण और षट् स्थानोंमें पतित जानना चाहिये। और इस पूर्वोक्त प्रकारसे ही अपने अपने जघन्य और उत्कृष्टोंके बीचमें तारतम्य से मध्यम भेद भी होते हैं। और ऐसेही जघन्यसे उत्कृष्ट पर्यन्त ज्ञानावरण आदि

भ्रमितान्यनेन जीवेन परं किन्तु पूर्वोक्तसमस्तप्रकृतिबन्धादीनां सद्भावविनाशकारणानि विशुद्धज्ञानदर्शनस्वभावनिजपरमात्मतत्वसम्यक्श्रद्धानज्ञानानुचरणरूपाणि यानि सम्यग्दर्शनज्ञानचारित्राणि तान्येव न लब्धानि। इति भावसंसारः।

एवं पूर्वोक्तप्रकारेण द्रव्यक्षेत्रकालभवभावरूपं पञ्चप्रकारं संसारं भावयतोऽस्य जीवस्य संसारातीतस्वशुद्धात्मसंवित्तिनाशकेषु संसारवृद्धिकारणेषु मिथ्यात्वाविरतिप्रमादकषाययोगेषु परिणामो न जायते, किन्तु संसारातीतसुखास्वादे रतो भूत्वा स्वशुद्धात्मसंवित्तिबलेन संसारविनाशकनिजनिरञ्जनपरमात्मन्येव भावनां करोति। ततश्च यादृशमेव परमात्मानं भावयति तादृशमेव लब्ध्वा संसारविलक्षणे मोक्षेऽनन्तकालं तिष्ठतीति। अयं तु विशेषः—नित्यनिगोदजीवान् विहाय पञ्चप्रकारसंसारव्याख्यानं ज्ञातव्यम्। कस्मादिति चेत्—नित्यनिगोदजीवानां कालत्रयेऽपि त्रसत्वं नास्तीति। तथा चोक्तं—"अत्थि अणंता जीवा जेहिं ण पत्तो तसाण परिणामो। भावकलंकसुपउरा णिगोदवासं ण मुंचंति। १।" अनुपममद्वितीयमनादिमिथ्यादृशोऽपि भरतपुत्रास्त्रयोविंशत्यधिकनवशतपरिमाणास्ते च नित्यनिगोदवासिनः क्षपितकर्माण इन्द्रगोपाः संजातास्तेषां च पुञ्जीभूतानामुपरि भरतहस्तिना पादो दत्तस्ततस्ते मृत्वापि वर्द्धनकुमारादयो भरतपुत्रा जातास्ते

---

मूल तथा उत्तर प्रकृतियोंके स्थितिबंधके स्थान होते हैं। वे सब परमागममें कही हुई आज्ञाके अनुसार इस जीवने अनन्त वार प्राप्त किये हैं, परन्तु पूर्वोक्त संपूर्ण प्रकृतिबंध आदिके सद्भावके नाशके कारण जो विशुद्ध ज्ञान दर्शन स्वभावका धारक निज परमात्मा तत्त्व है उसके सम्यक् श्रद्धान, ज्ञान और चारित्ररूप जो सम्यग्दर्शन ज्ञान चारित्र हैं, उन्हींको इस जीवने प्राप्त नहीं किया। इस प्रकार भावसंसारका स्वरूप है।

इस पूर्वोक्त प्रकारसे द्रव्य, क्षेत्र, काल, भव और भावरूप जो पांच प्रकारका संसार है उसको भावते हुए इस जीवके संसारसे हटानेको कारण जो निजशुद्ध आत्माका ज्ञान है उसका नाश करनेवाले और संसारकी वृद्धिके कारणभूत ऐसे जो मिथ्यात्व, अविरति, प्रमाद, कषाय और योग हैं उनमें परिणाम नहीं होता है; किन्तु वह जीव संसारसे अतीत (नहीं होनेवाला) जो सुख है उसके आस्वादमें रत (तत्पर) होके, निजशुद्ध आत्माके ज्ञानके बलसे संसारको नष्ट करनेवाला निज निरंजन परमात्मा है, उसीमें भावना करता है। और इसके पश्चात् जैसे परमात्माको भावता है, वैसे ही परमात्माको प्राप्त होके संसारसे विलक्षण जो मोक्ष है, उसमें अनन्त काल निवास करता है॥ यहांपर विशेष यह है कि नित्य निगोदके जीवोंको छोड़कर, इस उक्त पंच प्रकारके संसारका व्याख्यान जानना चाहिये, अर्थात् नित्य निगोद जीव इस पंच प्रकारके संसारमें परिभ्रमण नहीं करते हैं। क्योंकि—नित्य निगोदवर्त्ती जो जीव हैं उनके तीन कालमें भी त्रसता अर्थात् दोइन्द्रीपने आदिका धारण करना नहीं है। सो ही कहा है—"ऐसे अनंत जीव हैं कि जिन्होंने त्रस पर्यायको प्राप्त ही नहीं किया और भाव कलंकों (अशुभ परिणामों) से भरपूर हैं, जिससे वे

च केनचिदपि सह न वदन्ति । ततो भरतेन समवसरणे भगवान् पृष्टो, भगवता च प्राकूतनं वृत्तान्तं कथितम् । तच्छ्रुत्वा ते तपो गृहीत्वा क्षणस्तोककालेन मोक्षं गताः । आचाराराधनाटिप्पणे कथितमास्ते । इति संसारानुप्रेक्षा गता ॥

अथैकत्वानुप्रेक्षा कथ्यते । तद्यथा—निश्चयरत्नत्रयैकलक्षणैकत्वभावनापरिणतस्यास्य जीवस्य निश्चयनयेन सहजानन्दसुखाद्यनन्तगुणाधारभूतं केवलज्ञानमेवैकं सहजं शरीरम्। शरीरं कोऽर्थः स्वरूपं न च सप्तधातुमयौदारिकशरीरम् । तथैवार्त्तरौद्रदुर्ध्यानविलक्षणपरमसामायिकलक्षणैकत्वभावनापरिणतं निजात्मतत्त्वमेवैकं सदा शाश्वतं परमहितकारि न च पुत्रकलत्रादिः । तेनैव प्रकारेण परमोपेक्षासंयमलक्षणैकत्वभावनासहितः स्वशुद्धात्मपदार्थ एक एवाविनश्वरहितकारो परमोऽर्थः न च सुवर्णाद्यर्थः। तथैव निर्विकल्पसमाधिसमुत्पन्ननिर्विकारपरमानन्दैकलक्षणानाकुलत्वस्वभावात्मसुखमेवैकं सुखं न चाकुलत्वोत्पादकेन्द्रियसुखमिति । कस्मादिदं देहबन्धुजनसुवर्णाद्यर्थेन्द्रियसुखादिकं जीवस्य निश्चयेन निराकृतमिति चेत्, यतो मरणकाले जीव एक एव गत्यन्तरं गच्छति न च देहा-

---

निगोदके निवासको नहीं छोड़ते हैं"। और यह बात अनुपम और अद्वितीय है कि "अनादिकालसे मिथ्यादृष्टि ऐसे भी नौसौ तेईस (९२३) भरतजीके पुत्र जो कि नित्य निगोदके निवासी थे और नित्य निगोदमें कर्मोंकी निर्जरा होनेसे वे इन्द्रगोप (सावनकी डोकरी) नामक कीड़े हुए, सो उन सबके ढेरपर भरतके हाथीने पैर रख दिया इससे वे मरकर,भरतजीके वर्द्धनकुमार आदि पुत्र हुए और वे किसीके साथ भी नहीं बोलते थे। इस कारण,भरतजीने समवसरणमें भगवान्से पूछा तो भगवान्ने पुराना सब वृत्तान्त कहा। उसको सुनकर, उन सब वर्द्धनकुमारादि पुत्रोंने तप ग्रहण किया और बहुत ही अल्प कालमें मोक्ष चले गये।" यह कथा आचाराराधनाकी टिप्पणीमें कही हुई है। इस प्रकार संसार अनुप्रेक्षाका व्याख्यान समाप्त हुआ ॥

अब एकत्व अनुप्रेक्षाका वर्णन करते हैं। वह इस प्रकार है—निश्चयरत्नत्रयरूप एक लक्षणका धारक जो एकत्व है उसकी भावनामें परिणत इस जीवके निश्चयनयसे सहज आनन्द, सुख आदि अनन्त गुणोंका आधाररूप जो केवल ज्ञान है वह एक ही सहज (स्वभाव)से उत्पन्न शरीर है। यहां 'शरीर' शब्दका अर्थ स्वरूप समझना, न कि सात धातुओंसे निर्मित औदारिक शरीर। इसी प्रकार आर्त्त और रौद्र इन दोनों ध्यानोंसे विलक्षण (उलटी) जो परमसामायिक रूप एकत्व भावना है उसमें परिणत जो एक अपना आत्मतत्त्व है वही सदा अविनाशी और परम हितका करनेवाला है; और पुत्र,मित्र, कलत्र आदि हितके कर्त्ता नहीं। पूर्वोक्त रीतिसे ही परम उपेक्षा संयमरूप जो एकत्व भावना है, उससे सहित जो निज शुद्धात्म पदर्थ है, वह एक ही अविनाशी तथा हितकारी परम अर्थ (धन) है, और सुवर्ण आदिरूप अर्थ (धन) परम अर्थ नहीं है। एवमेव निर्विकल्प ध्यानसे उत्पन्न तथा निर्विकार परम आनन्दमय लक्षण और आकुलता-

दीनि । तथैव रोगव्याप्तिकाले विषयकषायादिदुर्ध्यानरहितः स्वशुद्धात्मैकसहायो भवति । तदपि कथमिति चेत् ? यदि चरमदेहो भवति तर्हि केवलज्ञानादिव्यक्तिरूपं मोक्षं नयति, अचरमदेहस्य तु संसारस्थितिं स्तोकां कृत्वा देवेन्द्राद्यभ्युदयसुखं दत्वा च पश्चात् पारम्पर्येण मोक्षं प्रापयतीत्यर्थः । तथा चोक्तं—"सग्गं तवेण सव्वो, वि पावए किंतु झाणजोयेण । जो पावइ सो पावइ, परं भवे सासयं सोक्खं । १ ।" एवमेकत्वभावनाफलं ज्ञात्वा निरन्तरं निजशुद्धात्मैकत्वभावना कर्त्तव्या । इत्येकत्वानुप्रेक्षा गता ॥ ४ ॥

तथान्यत्वानुप्रेक्षां कथयति । तथा हि—पूर्वोक्तानि यानि देहबन्धुजनसुवर्णाद्यर्थेन्द्रियसुखादीनि कर्माधीनत्वे विनश्वराणि तथैव हेयभूतानि च, तानि सर्वाणि टङ्कोत्कीर्णज्ञायकैकस्वभावत्वेन नित्यात्सर्वप्रकारोपादेयभूतान्निर्विकारपरमचैतन्यचिच्चमत्कारस्वभावान्निजपरमात्मपदार्थान्निश्चयनयेनान्यानि भिन्नानि । तेभ्यः पुनरात्माप्यन्यो भिन्न इति । अयमत्र

---

रहित स्वभावका धारक ऐसा आत्मसुख ही एक सुख है. और आकुलताको उत्पन्न करनेवाला इन्द्रियजन्य जो सुख है सो सुख नहीं । ये पूर्वोक्त जो जीवके शरीर, बंधुजन, सुवर्ण आदि अर्थ, और इन्द्रियसुख आदि हैं इनका निश्चयनयसे खंडन क्यों किया है ? ऐसी शंका करो तो समाधान यह है कि जब मरणका समय आता है तब यह जीव एक ( अकेला ) ही दूसरी गतिमें गमन करता है और देह आदि इस जीवके साथ नहीं जाते, किन्तु यहाँ के यहाँ ही रह जाते हैं । और जब यह जीव रोगोंसे व्याप्त होता है तब विषय तथा कषाय आदिरूप जो खोटे ध्यान हैं उनसे रहित एक निजशुद्ध आत्मा ही इसका सहायक होता है । और वह सहायक भी कैसा होता है ? इसका उत्तर यह है कि यदि उस जीवका अंतिम शरीर हो तब तो केवलज्ञान आदिकी प्रकटतारूप जो मोक्ष है उसमें ले जाता है और यदि अंतिम शरीर न हो तो वह शुभ ध्यानरूप शुद्ध आत्मा उस जीवकी जो संसारकी स्थिति है उसको अल्प करके और देव, इंद्र आदि पर्यायसंबंधी सुखोंको देकर, फिर परंपरासे मोक्षकी प्राप्ति करता है । यह भावार्थ है । सो ही कहा भी है—"तपके करनेसे स्वर्ग सब कोई पाते हैं, परंतु शुभ ध्यानके योगसे जो कोई स्वर्ग पाता है वह अग्रिम भवमें शाश्वत सुख अर्थात् मोक्षको पाता है ॥ १ ॥" ऐसे एकत्व भावनाके फलको जानकर, सदा निज शुद्ध आत्माके एकत्वरूप भावना ही करनी चाहिये । इस प्रकार एकत्व नामक चतुर्थ अनुप्रेक्षा समाप्त हुई ॥ ४ ॥

अब पंचम अन्यत्व अनुप्रेक्षाका कथन करते हैं । सो इस प्रकार है-पूर्व एकत्व भावनामें कहे हुए जो देह, बंधुजन, सुवर्ण आदि अर्थ और इन्द्रियसुख आदि हैं वे सब कर्मोंके आधीन हैं इसी कारण विनाश स्वभावके धारक हैं तथा हेय ( त्याज्य ) स्वरूप भी हैं । इस कारण टङ्कोत्कीर्ण एवं ज्ञायक रूप एक स्वभावसे नित्य, सब प्रकारोंसे उपादेय भूत और विकाररहित परम चैतन्य चित् चमत्कार स्वभावका धारक जो निज परमात्मा पदार्थ

भाव एकत्वानुप्रेक्षायामेकोऽहमित्यादिविधिरूपेण व्याख्यानं, अन्यत्वानुप्रेक्षायां तु देहादयो मत्सकाशादन्ये मदीया न भवन्तीति निषेधरूपेण। इत्येकत्वान्यत्वानुप्रेक्षायां विधिनिषेधरूप एव विशेषस्तात्पर्यं तदेव। इत्यन्यत्वानुप्रेक्षा समाप्ता ॥ ५ ॥

अतः परमशुचित्वानुप्रेक्षा कथ्यते। तद्यथा—सर्वाशुचिशुक्रशोणितकारणोत्पन्नत्वात्तथैव "वसासृग्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः" इत्युक्ताशुचिसप्तधातुमयत्वेन तथा नासिकादिनवरन्ध्रद्वारैरपि स्वरूपेणाशुचित्वात्तथैव मूत्रपुरीषाद्यशुचिमलानामुत्पत्तिस्थानत्वाच्चाशुचिरयं देहः। न केवलमशुचिकारणत्वेनाशुचिः स्वरूपेणाशुच्युत्पादकत्वेन चाशुचिः। शुचि सुगन्धमाल्यवस्त्रादीनामशुचित्वोत्पादकत्वाच्चाशुचिः। इदानीं शुचित्वं कथ्यते—सहजशुद्धकेवलज्ञानादिगुणानामाधारभूतत्वात्स्वयं निश्चयेन शुचिरूपत्वाच्च परमात्मैव शुचिः। "जीवो बह्मा जीवह्मि चेव चरिया हविज्ज जो जदिणो। तं जाण बह्मचेरं विमुक्कपरदेहभत्तीए। १।" इति गाथाकथितनिर्मलब्रह्मचर्यं तत्रैव निजपरमात्मनि

---

है, उससे वे सब निश्चयनयकी अपेक्षासे भिन्न हैं। और आत्मा भी उनसे भिन्न है। भावार्थ यहाँपर यह है कि—एकत्व अनुप्रेक्षामें तो 'मैं एक हूं' इत्यादि प्रकारसे विधिरूप व्याख्यान है और इस अन्यत्व अनुप्रेक्षामें 'देह आदिक पदार्थ मुझसे भिन्न हैं, ये मेरे नहीं हैं' इत्यादि निषेध रूपसे वर्णन है। इस प्रकार एकत्व और अन्यत्व इन दोनों अनुप्रेक्षाओंमें विधि तथा निषेधरूप ही विशेष ( भेद ) है और तात्पर्य तो दोनोंका एक ही है। ऐसे अन्यत्व अनुप्रेक्षा समाप्त हुई ॥ ५ ॥

अब आगे अशुचित्व अनुप्रेक्षाका कथन करते हैं। वह इस प्रकार है—सबसे अपवित्र ऐसे शुक्र ( पिताका वीर्य ) और शोणित ( माताका रुधिर ) रूप कारणसे उत्पन्न होनेके कारण तथा "वसा, रुधिर, मांस, मेद, अस्थि (हाड़), मज्जा, और शुक्र ये धातु हैं। इस प्रकार पूर्वोक्त अपवित्र जो सप्त ७ धातु हैं इनरूप होनेसे तथा नाक आदि नौ ९ छिद्रोंद्वारा स्वरूपसे भी अशुचि होनेसे और इसी भांतिसे मूत्र, पुरीष ( विष्ठा ) आदि अशुचि मलोंकी उत्पत्तिका स्थान होने से यह देह अशुचि है। और केवल अशुचि कारणसे उत्पन्न होनेके कारण ही यह अशुचि नहीं है; किन्तु यह शरीर स्वरूपसे भी अशुचि है और अशुचि मल आदिका जनक होनेसे भी अशुचि है। और पवित्र जो सुगन्ध, माला, वस्त्र आदि हैं उनमें भी यह शरीर अपने संसर्गसे अपवित्रता उत्पन्न करता है, इस कारण भी अशुचि है। अब पवित्रताका कथन करते हैं—सहज शुद्ध ऐसे जो केवलज्ञान आदि गुण हैं उनका आधारभूत होनेसे और निश्चयसे अपने आप पवित्र होनेसे यह परमात्मा ही शुचि है। "जीव ब्रह्म हैं, जीवहीमें जो मुनिकी चर्या ( प्रवृत्ति ) होवे उसको छोड़ी है परदेहकी सेवा जिसने ऐसा ब्रह्मचर्य जानो। १।" इस गाथामें कहा हुआ जो निर्मल ब्रह्मचर्य है, सो उस परमात्मामें स्थित हुए जीवोंके ही मिलता है। और इसी प्रकार

स्थितानामेव लभ्यते। तथैव "ब्रह्मचारी सदा शुचि" रितिवचनात्तथाविधब्रह्मचारिणामेव शुचित्वं न च कामक्रोधादिरतानां जलस्नानादिशौचेऽपि। तथैव च—"जन्मना जायते शूद्रः क्रियया द्विज उच्यते। श्रुतेन श्रोत्रियो ज्ञेयो ब्रह्मचर्येण ब्राह्मणः। १।" इति वचनात्त एव निश्चयशुद्धाः ब्राह्मणाः। तथा चोक्तं नारायणेन युधिष्ठिरं प्रति विशुद्धात्मनदीस्नानमेव परमशुचित्वकारणं न च लौकिकगङ्गादितीर्थे स्नानादिकम्। "आत्मा नदी संयमतोयपूर्णा सत्यावहा शीलतटा दयोर्मिः। तत्राभिषेकं कुरु पाण्डुपुत्र न वारिणा शुद्ध्यति चान्तरात्मा"। १। इत्यशुचित्वानुप्रेक्षा गता ॥ ६ ॥

अत ऊर्ध्वमास्रवानुप्रेक्षा कथ्यते। समुद्रे सच्छिद्रपोतवदयं जीव इन्द्रियाद्यास्रवैः संसारसागरे पततीति वार्त्तिकम्। अतीन्द्रियस्वशुद्धात्मसंवित्तिविलक्षणानि स्पर्शनरसनघ्राणचक्षुःश्रोत्राणीन्द्रियाणि भण्यन्ते। परमोपशममूर्तिपरमात्मस्वभावस्य क्षोभोत्पादकाः क्रोधमानमायालोभकषाया अभिधीयन्ते। रागादिविकल्पनिवृत्तिरूपायाः शुद्धात्मानुभूतेः प्रतिकूलानि हिंसानृतस्तेयाब्रह्मपरिग्रहप्रवृत्तिरूपाणि पञ्चाव्रतानि। निष्क्रियनिर्विकारात्मतत्त्वाद्विपरीता मनोवचनकायव्यापाररूपाः परमागमोक्ताः सम्यक्त्वक्रिया मिथ्यात्वक्रियेत्यादिपञ्चविंशतिक्रियाः उच्यन्ते। इन्द्रियकषायाव्रतक्रियारूपास्रवाणां स्वरूपमेत-

---

"ब्रह्मचारी सदा पवित्र है" इस वचनसे उन पूर्वोक्त प्रकारके ब्रह्मचारियोंके ही पवित्रता है। और जो काम तथा क्रोध आदिमें तत्पर जीव हैं उनके जलस्नान आदि शौचोंके करनेपर भी पवित्रता नहीं है। क्योंकि, इसीप्रकार "जन्मसे शूद्र होता है, क्रियासे द्विज कहलाता है, श्रुत (शास्त्र) से श्रोत्रिय जानना चाहिये और ब्रह्मचर्यसे ब्राह्मण जानना चाहिये। १।" ऐसा वचन है। इसलिये पूर्वोक्त परमात्मामें जो तत्पर हैं, वे ही निश्चयनयसे शुद्ध ब्राह्मण हैं। और नारायणने युधिष्ठिरसे कहा है कि शुद्ध जो आत्मारूपी नदी है उसमें स्नान करना ही परम पवित्रताका कारण है, किंतु लौकिक जो गंगा आदि तीर्थोंमें स्नान करना आदि है सो शुचित्वका कारण नहीं। इस विषयमें जो श्लोक है उसका अर्थ यह है—"संयमरूपी जलसे पूर्ण, सत्यको धारण करनेवाली शीलरूप तट और दयामय तरङ्गोंकी धारक ऐसी जो आत्मारूप नदी है उसमें हे पाण्डुपुत्र (युधिष्ठिर) स्नान कर; क्योंकि, अन्तरात्मा जलसे शुद्ध नहीं होता। १।" इस प्रकार अशुचित्व अनुप्रेक्षाका वर्णन समाप्त हुआ ॥ ६ ॥

अब इसके अनन्तर सप्तम आस्रवानुप्रेक्षाको कहते हैं। "जैसे छिद्रसहित नौका (नाव) समुद्रमें डूबती है, ऐसे ही इन्द्रिय आदि छिद्रों द्वारा यह जीव संसार रूप समुद्रमें गिरता है" यह वार्त्तिक है। इन्द्रियोंके अगोचर जो निज शुद्ध आत्माका ज्ञान है उससे विलक्षण स्पर्शन, रसन (जिह्वा), नासिका, नेत्र और कान ये पांच इन्द्रियां कहलाती हैं। परम उपशम स्वरूपका धारक जो परमात्माका स्वभाव है उसके क्षोभको उत्पन्न करनेवाले क्रोध, मान, माया और लोभ ये चार कषाय कहे जाते हैं। राग आदि विकल्पोंसे रहित जो शुद्ध आत्माका अनुभव है उससे प्रतिकूल ऐसे हिंसा, झूठ, चोरी, अब्रह्म और परिग्रह इन

क्षया। कुलपर्वतानां तु धातकीखण्डकुलपर्वतापेक्षया द्विगुणो विष्कम्भ आयामश्च। उत्सेधप्रमाणं पुनर्दक्षिणभागे विजयार्धपर्वते योजनानि पञ्चविंशतिः, हिमवति पर्वते शतं, महाहिमवति द्विशतं, निषधे चतुःशतं, तथोत्तरभागे च। मेरुसमीपगजदन्तेषु शतपञ्चकं, नदीसमीपे वक्षारेषु चान्त्यनिषधनीलसमीपे चतुःशतं च, शेषपर्वतानां च मेरुं त्यक्त्वा यदेव जम्बूद्वीपे भणितं तदेवार्धतृतीयद्वीपेषु च विज्ञेयम्। तथा नामानि च क्षेत्रपर्वतनदीदेशनगरादीनां तान्येव। तथैव क्रोशद्वयोत्सेधा पञ्चशतधनुर्विस्तारा पद्मरागरत्नमयी वनादीनां वेदिका सर्वत्र समानेति। अत्रापि चक्राकारवत्पर्वता आरविवरसंस्थानानि क्षेत्राणि ज्ञातव्यानि। मानुषोत्तरपर्वतादभ्यन्तरभाग एव मनुष्यास्तिष्ठन्ति न च बहिर्भागे। तेषां च जघन्यजीवितमन्तर्मुहूर्तप्रमाणम्, उत्कर्षेण पल्यत्रयं, मध्ये मध्यमविकल्पा बहवस्तथा तिरश्चां च। एवमसंख्येयद्वीपसमुद्रविस्तीर्णतिर्यग्लोकमध्येऽर्धतृतीयद्वीपप्रमाणः संक्षेपेण मनुष्यलोको व्याख्यातः॥

अथ मानुषोत्तरपर्वतसकाशाद्बहिर्भागे स्वयम्भूरमणद्वीपार्धं परिक्षिप्य योऽसौ नागेन्द्र-

---

धातकीखंडकी अपेक्षा भरत आदि दूने नहीं हैं। और कुलपर्वतोंका विष्कम्भ तथा आयाम धातकीखंडके कुलपर्वतोंकी अपेक्षा द्विगुण है। और ऊँचाईका प्रमाण जो दक्षिण भागमें विजयार्धपर्वत है उसमें पच्चीस योजन है, हिमवत् पर्वतमें सौ १०० योजन, महाहिमवान् पर्वतमें दोसौ योजन, निषधमें चारसौ योजन प्रमाण है। तथा उत्तर भागमें भी इसी प्रकार उत्सेध प्रमाण हैं। मेरुके समीप भागमें जो गजदंत हैं उनमें पांचसौ योजनकी ऊँचाई है। नदीके निकटवर्त्ती जो वक्षार पर्वत हैं उनमें तथा अन्तिम नील और निषध पर्वतके पास चारसौ योजनकी ऊँचाई है। और मेरुको छोड़कर जो शेष (बाकीके) पर्वत हैं उनमें जो जंबूद्वीपमें कही है सोही ढाई द्वीपमें जाननी चाहिये। तथा क्षेत्र, पर्वत, नदी, देश, नगर आदिके नाम भी वेही हैं जो कि जंबूद्वीपमें हैं। और इसी प्रकार दो कोश ऊँची पांचसौ धनुष चौड़ी पद्मराग रत्ननिर्मित जो वन आदिकी वेदिका है वह सब द्वीपोंमें समान है। इस पुष्करार्ध द्वीपमें भी चक्रके आकार समान पर्वत हैं और आरोंके छिद्रोंके समान क्षेत्र हैं, यह समझना चाहिये। मानुषोत्तर पर्वतके अभ्यन्तर (अंदर) के भागमें ही मनुष्य निवास करते हैं और बाह्य भागमें नहीं, और उन मनुष्योंका जघन्य आयु अन्तर्मुहूर्तके तथा उत्कृष्ट आयु तीन पल्यके बराबर है। मध्यमें मध्यम विकल्प बहुतसे हैं। तिर्यंचोंका आयु भी मनुष्योंके आयुके सदृश ही है। इस प्रकार असंख्यात द्वीप समुद्रोंसे विस्तारको प्राप्त जो तिर्यग्लोक है, उसके मध्यमें ढाई द्वीप प्रमाण जो मनुष्यलोक है उसका संक्षेपसे व्याख्यान किया॥

अब मानुषोत्तर पर्वतसे बाह्य भागमें स्वयंभूरमण नामा द्वीपके अर्धभागको बेढ़कर जो नागेन्द्र नामक पर्वत है उस पर्वतके पूर्व भागमें जो असंख्यात द्वीप समुद्र हैं उनमें यद्यपि

नामा पर्वतस्तस्मात्पूर्वभागे ये संख्यातीता द्वीपसमुद्रास्तिष्ठन्ति तेषु यद्यपि व्यन्तरा निरन्तरा इति वचनाद् व्यन्तरदेवावासास्तिष्ठन्ति तथापि पल्यप्रमाणायुषां तिरश्चां संबन्धिनी जघन्यभोगभूमिरिति ज्ञेयम् । नागेन्द्रपर्वताद्बहिर्भागे स्वयम्भूरमणद्वीपार्धे समुद्रे च पुनर्विदेहवत्सर्वदैव कर्मभूमिश्चतुर्थकालश्च । परं किन्तु मनुष्या न सन्ति । एवमुक्तलक्षणतिर्यग्लोकस्य, तदन्तरं मध्यमभागवर्त्तिनो मनुष्यलोकस्य च प्रतिपाददेन संक्षेपेण मध्यमलोकव्याख्यानं समाप्तम् । अथ मनुष्यलोके द्विहीनशतचतुष्टयं तिर्यग्लोके तु नन्दीश्वरकुण्डलरुचकाभिधानद्वीपत्रयेषु क्रमेण द्विपञ्चाशच्चतुष्टयचतुष्टयसंख्याश्चाकृत्रिमाः स्वतन्त्रजिनगृहा ज्ञातव्याः ॥

अत ऊर्ध्वं ज्योतिर्लोकः कथ्यते । तद्यथा—चन्द्रादित्यग्रहनक्षत्राणि प्रकीर्णतारकाश्चेति ज्योतिष्कदेवाः पञ्चविधा भवन्ति । तेषां मध्येऽस्माद्भूमितलादुपरि नवत्यधिकसप्तशतयोजनान्याकाशे गत्वा तारकविमानाः सन्ति । ततोऽपि योजनदशकं गत्वा सूर्यविमानाः, ततः परमशीतियोजनानि गत्वा चन्द्रविमानाः, ततोऽपि त्रैलोक्यसारकथितक्रमेण योजनचतुष्टयं गते

---

व्यन्तर देव निरन्तर रहते हैं, इस वचनसे व्यन्तर देवोंके आवास हैं तथापि एक पल्य प्रमाण आयुके धारक तिर्यंचों संबंधिनी जघन्य भोगभूमि है ऐसा जानना चाहिये । तथा नागेन्द्रपर्वतसे बाह्य भागमें जो स्वयंभूरमण नामक आधा द्वीप और पूर्ण स्वयंभूरमण समुद्र है, उसमें विदेह क्षेत्रके समान सदा ही कर्मभूमि और चतुर्थ काल रहता है । परन्तु विशेष यह है कि वहाँपर मनुष्य नहीं हैं । इस प्रकार पूर्वोक्त लक्षणके धारक तिर्यग्लोकके तथा उसके पश्चात् उस तिर्यक् लोकके मध्यमें विद्यमान जो मनुष्य लोक है उसके संक्षेपसे निरूपणद्वारा मध्यलोकका व्याख्यान समाप्त हुआ । और मनुष्यलोकमें तीनसौ अट्ठानवे ३९८ और तिर्यक् लोकमें नन्दीश्वर द्वीपमें बावन ५२, कुण्डल द्वीपमें ४ तथा रुचक द्वीपमें ४, इस प्रकार सब मिलके मध्यलोकमें चारसौ अट्ठावन ४५८ अकृत्रिम स्वतंत्र चैत्यालय जानने चाहिये ॥

अब इसके अनंतर ज्योतिष्कलोकका वर्णन करते हैं । वह इस प्रकार है-चन्द्र, सूर्य, ग्रह, नक्षत्र, प्रकीर्णकतारा ऐसे ज्योतिष्क देव पांच प्रकारके होते हैं । उनके मध्यमें इस पृथ्वीतलसे ऊपर सातसौ नव्वे ७९० योजन आकाशमें जाकर तारोंके विमान हैं, और वहांसे दश योजन ऊपर जाकर सूर्यों के विमान हैं । उसके पश्चात् अस्सी योजन ऊपर जाकर चन्द्रमाके विमान हैं । उसके अनंतर त्रैलोक्यसारमें कहे हुए क्रमानुसार चार योजन ऊपर जाकर अश्विनी आदि नक्षत्रोंके विमान हैं । उनके पश्चात् चार योजन ऊपर जाकर बुधके विमान हैं । उसके अनन्तर तीन योजन ऊपर जाकर शुक्रके विमान हैं । और वहांसे तीन योजन ऊपर चलकर बृहस्पतिके विमान हैं । उसके पश्चात् तीन योजनपर मंगलके विमान हैं । और वहांसे भी तीन योजनके अनन्तर शनैश्चरके विमान हैं । सोही कहा है—

अश्विन्यादिनक्षत्रविमानाः, ततःपरं योजनचतुष्टयं गत्वा बुधविमानाः, ततः परं योजनत्रयं गत्वा शुक्रविमानाः, ततो योजनत्रये गते बृहस्पतिविमानाः, ततो योजनत्रयानन्तरं मङ्गलविमानाः, ततोऽपि योजनत्रयानन्तरं शनैश्चरविमाना इति। तथा चोक्तं "णउदुत्तरसत्तसया दस सीदी चउदुगं तु तिचउक्कं। ताररविससिरिक्खा बुहभग्गवअंगिरारसणी।१।" ते च ज्योतिष्कदेवा अर्धतृतीयद्वीपेषु निरन्तरं मेरोः प्रदक्षिणेन परिभ्रमणगतिं कुर्वन्ति। तत्र घटिकाप्रहरदिवसादिरूपः स्थूलव्यवहारकालः समयनिमिषादिसूक्ष्मव्यवहारकालवत् यद्यप्यनादिनिधनेन समयघटिकादिविवक्षितविकल्परहितेन कालाणुद्रव्यरूपेण निश्चयकालेनोपादानभूतेन जन्यते तथापि चन्द्रादित्यादिज्योतिष्कदेवविमानगमनागमनेन कुम्भकारेण निमित्तभूतेन मृत्पिण्डोपादानजनितघट इव व्यज्यते प्रकटीक्रियते ज्ञायते तेन कारणेनोपचारेण ज्योतिष्कदेवकृत इत्यभिधीयते। निश्चयकालस्तु तद्विमानगतिपरिणतेर्बहिरङ्गसहकारिकारणं भवति कुम्भकारचक्रभ्रमणस्याधस्तनशिलावदिति ॥

इदानीमर्धतृतीयद्वीपेषु चन्द्रादित्यसंख्या कथ्यते। तथाहि—जम्बूद्वीपे चन्द्रद्वयं सूर्यद्वयं च, लवणोदे चतुष्टयं, धातकीखण्डद्वीपे द्वादश चन्द्रादित्याश्च, कालोदकसमुद्रे द्विचत्वारिंशच्चन्द्रादित्याश्च, पुष्करार्धे द्वीपे द्वासप्ततिचन्द्रादित्याश्चेति। ततः परं भरतैरावतस्थितजम्बूद्वीपचन्द्रसूर्ययोः किमपि विवरणं क्रियते। तद्यथा—जम्बूद्वीपाभ्यन्तरे योजनाना-

---

"सातसौ नव्वे, दस, अस्सी, चार, चार, तीन, तीन, तीन, और तोन योजन ऊपर क्रमसे तारा, सूर्य, चन्द्र, नक्षत्र, बुध, शुक्र, बृहस्पति, मंगल और शनैश्चर के विमान हैं।१।"। वे ज्योतिष्कदेव ढाई द्वीपमें निरन्तर ( सदा ) मेरुकी प्रदक्षिणापूर्वक परिभ्रमण ( गमन ) करते हैं। उन ढाई द्वीपोंमें घटिका, प्रहर, दिवस आदिरूप स्थूल ( मोटा ) व्यवहार काल है। समय, निमिष आदि सूक्ष्म कालके समान यद्यपि यह काल अनादिनिधन ( आदि और अन्तरहित ) और समय, घटिका आदि विवक्षित भेदोंसे रहित जो कालाणुद्रव्यरूप उपादानभूत निश्चयकाल है उससे उत्पन्न होता है; तथापि जैसे निमित्तभूत कुम्भकारद्वारा मृत्तिकापिंड है उपादानकारण जिसका ऐसा घट प्रकट किया जाता है, उसी प्रकार चन्द्र, सूर्य आदि ज्योतिष्कदेवोंके विमानोंके गमनागमन ( जाने आने )से यह काल जाना जाता है, इस कारण उपचारसे "व्यवहार काल ज्योतिष्कदेवोंका किया हुआ है" ऐसा कहा जाता है। और जो निश्चय काल है वह तो जैसे कुम्भकारके चक्र ( चाक )के भ्रमणमें उस चक्रके नीचेकी शिला बहिरंग सहकारी कारण है उस प्रकार उन ज्योतिष्कदेवोंके विमानोंकी गति-परिणति ( गमनरूप परिणाम )में बहिरंग सहकारी कारण होता है ॥

अब ढाई द्वीपोंमें जो चन्द्र और सूर्य हैं उनकी संख्याका कथन करते हैं। वह इस प्रकार है—जंबूद्वीपमें दो चन्द्रमा और दो सूर्य हैं, लवणोदकसमुद्रमें चार चन्द्रमा और चार सूर्य हैं, धातकीखण्ड द्वीपमें बारह चन्द्रमा और बारह सूर्य हैं, कालोदक समुद्रमें बयालीस ४२ चन्द्रमा और बयालीस ४२ ही सूर्य हैं तथा पुष्करार्ध द्वीपमें बहत्तर ७२ चन्द्रमा

मशीतिशतं बहिर्भागे लवणसमुद्रसंबन्धे त्रिंशदधिकशतत्रयमिति समुदायेन दशोत्तरयोजनशतपञ्चकं चारक्षेत्रं भण्यते तच्चन्द्रादित्ययोरेकमेव। तत्र भरतेन बहिर्भागे तस्मिंश्चारक्षेत्रे सूर्यस्य चतुरशीतिशतसंख्या मार्गा भवन्ति, चन्द्रस्य पञ्चदशैव। तत्र जम्बूद्वीपाभ्यन्तरे कर्कटसंक्रान्तिदिने दक्षिणायनप्रारम्भे निषधपर्वतस्योपरि प्रथममार्गे सूर्यः प्रथमोदयं करोति। यत्र सूर्यविमानस्थं निर्दोषपरमात्मनो जिनेश्वरस्याकृत्रिमं जिनबिम्बं प्रत्यक्षेण दृष्ट्वा अयोध्यानगरीस्थितो निर्मलसम्यक्त्वानुरागेण भरतचक्री पुष्पाञ्जलिमुत्क्षिप्यार्घं ददातीति। तन्मार्गस्थितभरतक्षेत्रादित्यस्यैरावतादित्येन सह तथापि चन्द्रस्यान्यचन्द्रेण सह यदन्तरं भवति तद्विशेषेणागमतो ज्ञातव्यम् ॥

अथ "सदभिस भरणी अद्दा सादी असलेस जेट्ठमवरवरा। रोहिणिविसहपुणव्वसु तिउत्तरा मज्झिमा सेसा। १।" इति गाथाकथितक्रमेण यानि जघन्योत्कृष्टमध्यनक्षत्राणि तेषु मध्ये कस्मिन्नक्षत्रे कियन्ति दिनान्यादित्यस्तिष्ठतीति। "इन्दुरवीदो रिक्खा सत्तट्ठिय-पंचमयणखंडहिया। अहियहिदरिक्खखंडा इन्दुरवीअत्थण्णमुहुत्ता। १।" इत्यनेन गाथासूत्रेणागमकथितक्रमेण पृथक् पृथगानीय मेलापके कृते सति षडधिकषष्टियुतत्रिशतसंख्य-

---

और बहत्तर ही सूर्य हैं। इसके अनन्तर भरत और ऐरावतमें स्थित जो जम्बूद्वीपके चन्द्र तथा सूर्य हैं उनका कुछ थोड़ासा विवरण करते हैं। वह इस प्रकार है-जम्बूद्वीपके भीतर एकसौ अस्सी और बाह्य भागमें अर्थात् लवणसमुद्रके संबंधमें तीनसौ तीस योजन ऐसे दोनों मिलकर पांचसौ दश योजन प्रमाण सूर्यका चारक्षेत्र ( गमनका क्षेत्र ) कहलाता है। सो चन्द्र तथा सूर्य इन दोनोंका एक ही है। इनमें भरक्षेत्रसे बाह्य भागमें उस चारक्षेत्रमें सूर्यके एकसौ चौरासी मार्ग होते हैं और चन्द्रमाके पन्द्रह ही मार्ग हैं। उनमें जंबूद्वीपके भीतर कर्कट संक्रान्तिके दिवस जब कि दक्षिण अयनका प्रारंभ होता है तब निषध पर्वतके ऊपर प्रथम मार्गमें सूर्य प्रथम उदय करता है। जहांपर सूर्यके विमानमें वर्तमान जो निर्दोष परमात्मा श्रीजिनेन्द्र हैं उनके अकृत्रिम जिनबिंबको अयोध्या नगरीमें स्थित भरतक्षेत्रका चक्रवर्ती निर्मल सम्यक्त्वके अनुरागसे अवलोकन करके, पुष्पांजलि उछालकर, अर्घ देता है। उस प्रथम मार्गमें स्थित जो भरतक्षेत्रका सूर्य है उसका ऐरावत क्षेत्रके सूर्यके साथ तथा चंद्रमाका चन्द्रमाके साथ और भरतक्षेत्रके सूर्य चन्द्रमाओंका मेरुके साथ जो अन्तर ( फासला व दूरी ) रहता है वह विशेषतासे आगमोंसे जानना चाहिये ॥

अब "शतभिषा, भरणी, आर्द्रा, स्वाती, आश्लेषा, ज्येष्ठा ये छः नक्षत्र जघन्य हैं। रोहिणी, विशाखा, पुनर्वसु, उत्तराफाल्गुनी, उत्तराषाढा, और उत्तराभाद्रपद ये ६ नक्षत्र उत्कृष्ट हैं। इनके अतिरिक्त शेष जो नक्षत्र हैं वे मध्यम हैं। १। इस गाथामें कहे हुए क्रमके अनुसार जो जघन्य, उत्कृष्ट तथा मध्यम नक्षत्र हैं, उनमें किस नक्षत्रमें कितने दिन सूर्य ठहरता है सो कहते हैं। एक मुहूर्त्तमें चन्द्र १७६८, सूर्य १८३० और नक्षत्र १८३५ गगनखंडोंमें गमन करते हैं, इसलिये अधिकभागोंसे नक्षत्रखंडोंके भाग देनेसे जो मुहूर्त्त

दिनानि भवन्ति। तस्य दिनसमूहार्धस्य यदा द्वीपाभ्यन्तराद्दक्षिणेन बहिर्भागेषु दिनकरो गच्छति तद्वा दक्षिणायनसंज्ञा; यदा पुनः समुद्रात्सकाशादुत्तरेणाभ्यन्तरमार्गेषु समायाति तदोत्तरायणसंज्ञेति। तत्र यदा द्वीपाभ्यन्तरे प्रथममार्गपरिधौ कर्कटसंक्रान्तिदिने दक्षिणायनप्रारम्भे तिष्ठत्यादित्यस्तदा चतुर्णवतिसहस्रपञ्चविंशत्यधिकपञ्चयोजनशतप्रमाण उत्कर्षेणादित्यविमानस्य पूर्वापरेणातपविस्तारो ज्ञेयः। तत्र पुनरष्टादशमुहूर्त्तैर्दिवसो भवति द्वादशमुहूर्त्तैं रात्रिरिति। ततः क्रमेणातपहानौ सत्यां मुहूर्त्तद्वयस्यैकषष्टिभागीकृतस्यैको भागो दिवसमध्ये दिनं प्रति हीयते यावल्लवणसमुद्रेऽवसानमार्गे माघमासे मकरसंक्रान्तावुत्तरायणदिवसे त्रिषष्टिसहस्राधिकषोडशयोजनप्रमाणो जघन्येनादित्यविमानस्य पूर्वापरेणातपविस्तारो भवति। तथैव द्वादशमुहूर्त्तैर्दिवसो भवत्यष्टादशमुहूर्त्तैं रात्रिश्चेति। शेषं विशेषव्याख्यानं लोकविभागादौ विज्ञेयम्।

ये तु मनुष्यक्षेत्राद्बहिर्भागे ज्योतिष्कविमानास्तेषां चलनं नास्ति। ते च मानुषोत्तरपर्वताद्बहिर्भागे पञ्चाशत्सहस्राणि योजनानां गत्वा वलयाकारं पंक्तिक्रमेण पूर्वक्षेत्रं परिवेष्ट्य

---

प्राप्त होते हैं, उन मुहूर्त्तोंको चंद्र और सूर्यके आसन्न मुहूर्त्त जानने चाहिये। अर्थात् उतने मुहूर्त्तों तक चन्द्रमा और सूर्यकी एक नक्षत्र पर स्थिति जाननी चाहिये। इस प्रकार इस गाथामें कहे हुए क्रमसे भिन्नभिन्न दिनोंको लेकर, उनको जोड़नेसे तीनसौ छयासठ ३६६ दिन होते हैं। जब द्वीपके भीतरसे दक्षिण दिशाके बाह्य मार्गोंमें सूर्य गमन करता है तब तीनसौ छयासठ दिनके आधे जो एकसौ तिरासी १८३ दिन हैं उनकी दक्षिणायन संज्ञा होती है, और इसी प्रकार जब सूर्य समुद्रसे उत्तर दिशाको अभ्यन्तर मार्गोंमें आता है तब शेष जो १८३ दिन हैं उनका उत्तरायण नाम होता है। उनमें जब द्वीपके अभ्यन्तर भागमें कर्कट संक्रान्तिके दिन दक्षिण अयनके प्रारंभमें सूर्य प्रथम मार्गकी परिधिमें स्थित होता है तब चौरानवे हजार पांचसौ पच्चीस योजन प्रमाण सूर्यके विमानका पूर्व पश्चिमसे आतप (धूपका) विस्तार (फैलाव) होता है यह जानना चाहिये। और उस समय अठारह मुहूर्त्तोंसे दिन और बारह मुहूर्त्तोंसे रात्रि होती है। फिर यहांसे क्रम क्रमसे आतपकी हानि होनेपर दो मुहूर्त्तोंके इकसठ भागोंमेंसे एक भाग प्रतिदिन दिवसमें घटता है। यह तबतक घटता है जबतक कि लवणसमुद्रके अन्तके मार्गमें माघमासमें मकर संक्रान्तिमें उत्तरायण दिवसके प्रारंभमें जघन्यतासे सूर्यके विमानका आतप विस्तार त्रेसठ हजार सोलह योजन प्रमाण होता है। उस समय उसी प्रकार बारह मुहूर्तोंसे दिन और अठारह मुहूर्त्तोंसे रात्रि होती है। इसके अतिरिक्त अन्य जो विशेष वर्णन है सो लोकविभाग आदिसे जानना चाहिये॥

और जो मनुष्यक्षेत्र (ढाई द्वीप)से बहिर्भागमें ज्योतिष्कविमान हैं उनका चलन(गमन) नहीं है; तथा वे मानुषोत्तर पर्वतके बाह्य भागमें पचास हजार योजन गमन कर, वलयाकार (गोलाकार) पंक्तिरूप क्रमसे पूर्व (पहले) क्षेत्रको वेढ़ (घेर) कर, रहते हैं। उनमें

तिष्ठन्ति । तत्र प्रथमवलये चतुश्चत्वारिंशदधिकशतप्रमाणाश्चन्द्रास्तथादित्याश्चान्तरान्तरेण तिष्ठन्ति । ततः परं योजनलक्षे लक्षे गते तेनैव क्रमेण वलयं भवति । अयन्तु विशेषः—वलये वलये चन्द्रचतुष्टयं सूर्यचतुष्टयं च वर्धते यावत्पुष्कराधबहिर्भागे वलयाष्टकमिति ततः पुष्करसमुद्रप्रवेशे वेदिकायाः सकाशात्पञ्चाशत्सहस्रप्रमितयोजनानि जलमध्ये प्रविश्य यत्पूर्वं चत्वारिंशदधिकशतप्रमाणं प्रथमवलयं व्याख्यातं तस्माद् द्विगुणसंख्यानं प्रथमवलयं भवति । तदनन्तरं पूर्ववद्योजनलक्षे लक्षे गते वलयं भवति चन्द्रचतुष्टयस्य सूर्यचतुष्टयस्य च वृद्धिरित्यनेनैव क्रमेण स्वयम्भूरमणसमुद्रबहिर्भागवेदिकापर्यन्तं ज्योतिष्कदेवानामवस्थानं बोद्धव्यम् । एते च प्रतरासंख्येयभागप्रमिता असंख्येया ज्योतिष्कविमाना अकृत्रिमसुवर्णमयरत्नमयजिनचैत्यालयमण्डिता ज्ञातव्याः । इति संक्षेपेण ज्योतिष्कलोकव्याख्यानं समाप्तम् ॥

अथानन्तरमूर्ध्वलोकः कथ्यते । तथाहि—सौधर्मैशानसानत्कुमारमाहेन्द्रब्रह्मब्रह्मोत्तरलान्तवकापिष्ठशुक्रमहाशुक्रशतारसहस्रारानतप्राणतारणाच्युतसंज्ञाः षोडश स्वर्गास्ततोऽपि नवग्रैवेयकसंज्ञास्ततश्च नवानुदिशसंज्ञं नवविमानसंख्यमेकपटलं ततोऽपि पञ्चानुत्तरसंज्ञं पञ्चविमानसंख्यमेकपटलं चेत्युक्तक्रमेणोपर्युपरि वैमानिकदेवास्तिष्ठन्तीति वार्त्तिकं संग्र-

---

जो प्रथम वलय है उसमें एकसौ चवालीस १४४ चन्द्रमा तथा सूर्य अन्तरान्तर (दूर दूर) से निवास करते हैं। उसके पश्चात् एक एक लाख योजन चले जानेपर इसी पूर्वोक्त क्रमानुसार वलय होता है। और विशेष यह है कि वलय वलय (हर एक वलय)में चार चन्द्रमा तथा चार सूर्य बढ़ते हैं सो ये पुष्करार्धके बाह्य भागमें जो आठ वलय हैं वहांतक बढ़ते हैं। उसके पश्चात् पुष्कर समुद्रके प्रवेशमें जो वेदिका है उससे पचास हजार योजन प्रमाण जलभागमें जाकर, जो पहले प्रथम वलयमें एकसौ चवालीस चन्द्र तथा सूर्योंका कथन किया है उससे द्विगुण अर्थात् दोसौ अट्ठासी चंद्रमा और सूर्योंका धारक प्रथम वलय है। उसके पश्चात् पूर्वोक्त प्रकार एक एक लाख योजन चले जानेपर वलय है और प्रत्येक वलयमें चार चन्द्रमा और चार सूर्योंकी वृद्धि होती है। सो इसी क्रमसे स्वयंभूरमण समुद्रकी अंतकी वेदिका पर्यन्त ज्योतिष्कदेवोंका निवास जानना चाहिये। और ये सब प्रतरके असंख्यातवें भाग प्रमाण असंख्यात ज्योतिष्कविमान अकृत्रिम सुवर्ण तथा रत्नमय जो जिनचैत्यालय हैं उनसे भूषित हैं ऐसा समझना चाहिये। इस प्रकार संक्षेपसे ज्योतिष्क लोकका वर्णन समाप्त हुआ॥

अब इसके अनंतर ऊर्ध्वलोकका कथन करते हैं। वह इस प्रकार है-सौधर्म, ईशान, सानत्कुमार, माहेन्द्र, ब्रह्म, ब्रह्मोत्तर, लांतव, कापिष्ठ, शुक्र, महाशुक्र, शतार, सहस्रार, आनत, प्राणत, आरण और अच्युत, इन नामोंके धारक सोलह स्वर्ग हैं। वहांसे आगे नव ग्रैवेयक नामवाले विमान हैं, और इनके भी अनंतर नव ९ विमानोंकी संख्याका धारक नवानुदिश नामक एक पटल है, तथा इसके भी अनंतर पांच विमानोंकी संख्यावाला पञ्चा-

हवाक्यं समुदायकथनमिति यावत् । आदिमध्यान्तेषु द्वादशाष्टचतुर्योजनवृत्तविष्कम्भा चत्वारिंशत्प्रमितयोजनोत्सेधा या मेरुचूलिका तिष्ठति तस्योपरि कुरुभूमिजमर्त्यवालाग्रान्तरितं पुनऋजुविमानमस्ति । तदादिं कृत्वा चूलिकासहितलक्षयोजनप्रमाणं मेरूत्सेधमानमर्द्धाधिकैकरज्जुप्रमाणं यदाकाशक्षेत्रं तत्पर्यन्तं सौधर्मैशानसंज्ञं स्वर्गयुगलं तिष्ठति । ततः परमर्द्धाधिकैकरज्जुपर्यन्तं सानत्कुमारमाहेन्द्रसंज्ञं स्वर्गयुगलं भवति, तस्मादर्द्धरज्जुप्रमाणाकाशपर्यन्तं ब्रह्मब्रह्मोत्तराभिधानं स्वर्गयुगलमस्ति, ततोऽप्यर्द्धरज्जुपर्यंतं लान्तवकापिष्टनामस्वर्गयुगलमस्ति. ततश्चार्द्धरज्जुपर्यन्तं शुक्रमहाशुक्राभिधानं स्वर्गद्वयं ज्ञातव्यम्, तदनन्तरमर्द्धरज्जुपर्यन्तं शतारसहस्रारसंज्ञं स्वर्गयुगलं भवति, ततोऽप्यर्द्धरज्जुपर्यन्तमानतप्राणतनाम स्वर्गयुगलं, ततः परमर्द्धरज्जुपर्यन्तमाकाशं यावदारणाच्युताभिधानं स्वगद्वयं ज्ञातव्यमिति । तत्र प्रथमयुगलद्वये स्वकीयस्वकीयस्वर्गनामानश्चत्वार इन्द्रा विज्ञेया:, मध्ययुगलचतुष्टये पुनः स्वकीयस्वकीयप्रथमस्वर्गाभिधान एकैक एवेन्द्रो भवति, उपरितनयुगलद्वयेऽपि स्वकीयस्वकीयस्वर्गनामानश्चत्वार इन्द्रा भवन्तीति समुदायेन षोडशस्वर्गेषु द्वाद-

---

नुत्तर संज्ञक एक पटल है। इस प्रकार पूर्वोक्त क्रमसे वैमानिक देव निवास करते हैं। यह वार्त्तिक अर्थात् संग्रहवाक्य अथवा समुदायसे कथन है। आदिमें बारह, मध्यमें आठ और अन्तमें चार योजन प्रमाण गोल विष्कंभ ( व्यास ) की धारक, चालीस योजन प्रमाण ऊँची जो मेरुकी चूलिका है; उसके ऊपर देवकुरु अथवा उत्तरकुरु नामक उत्तम भोगभूमिमें उत्पन्न जो मनुष्य हैं उनके बालके अग्रभाग जितने अन्तर ( फासले ) पर ऋजु विमान है । उस ऋजुविमानको आदिमें करके चूलिका सहित एक लाख योजन प्रमाण मेरुकी ऊँचाईका प्रमाण है, और वहाँसे डेढ़ रज्जु प्रमाण जो आकाशक्षेत्र है वहांतक सौधर्म तथा ईशान नामक दो स्वर्ग हैं । इनके अनंतर डेढ़ रज्जुपर्यन्त सनत्कुमार और माहेन्द्र नामक दो स्वर्ग हैं। वहांसे अर्ध रज्जु प्रमाण आकाशतक ब्रह्म तथा ब्रह्मोत्तर संज्ञक स्वर्गोंका युगल है। वहां से भी आधे रज्जुतक लांतव और कापिष्ट नामक दो स्वर्ग हैं। वहां से भी आधे रज्जु प्रमाण आकाशमें शुक्र तथा महाशुक्र नामक स्वर्गोंका युगल जानना चाहिये । उसके अनन्तर आधे रज्जुतक शतार और सहस्रार नामक स्वर्गोंका युगल है। तत्पश्चात् आधे रज्जुपर्यन्त आकाशतक आरण और अच्युत नामक दो स्वर्ग जानने चाहिये । उनमें पहलेके जो दो युगल हैं उनमें तो अपने अपने स्वर्गके नामके धारक चार इन्द्र हैं अर्थात् पहले चार स्वर्गोंमें स्वर्गोंके नामवाले ही ( सौधर्म, ईशान आदि ) चार इन्द्र हैं। और बीचके जो चार युगल हैं उनमें अपने अपने प्रथम स्वर्गके नामका धारक एक एक ही इंद्र है अर्थात् ब्रह्म और ब्रह्मोत्तर स्वर्गका एक इंद्र है और ब्रह्म स्वर्गका इंद्र कहलाता है । ऐसे बारहवें स्वर्गतक आठ स्वर्गोंमें चार इंद्र जानने। और इनके ऊपर जो दो युगल हैं उनमें भी अपने अपने स्वर्गके नामके धारक ( आनत, प्राणत आदि ) चार इन्द्र होते हैं।

शेन्द्रा ज्ञातव्याः । षोडशस्वर्गादूर्ध्वमेकरज्जुमध्ये नवग्रैवेयकनवानुदिशपञ्चानुत्तरविमानवासिदेवास्तिष्ठन्ति । ततः परं तत्रैव द्वादशयोजनेषु गतेष्वष्टयोजनबाहुल्या मनुष्यलोकवत्पञ्चाधिकचत्वारिंशल्लक्षयोजनविस्तारा मोक्षशिला भवति । तस्योपरि घनोदधिघनवाततनुवातत्रयमस्ति । तत्र तनुवातमध्ये लोकान्ते केवलज्ञानाद्यनन्तगुणसहिताः सिद्धास्तिष्ठन्ति ॥

इदानीं स्वर्गपटलसंख्या कथ्यते-सौधर्मैशानयोरेकत्रिंशत्, सानत्कुमारमाहेन्द्रयोः सप्त, ब्रह्मब्रह्मोत्तरयोश्चत्वारि, लान्तवकापिष्टयोर्द्वयम्, शुक्रमहाशुक्रयोः पटलमेकम्, शतारसहस्रारयोरेकम्, आनतप्राणतयोस्त्रयम्, आरणाच्युतयोस्त्रयमिति । नवसु ग्रैवेयकेषु नवकं, नवानुदिशेषु पुनरेकं, पञ्चानुत्तरेषु चैकमिति समुदायेनोपर्युपरि त्रिषष्टिपटलानि ज्ञातव्यानि । तथा चोक्तं "इगतीससत्तचत्तारिदोण्णिएक्केक्कछक्कचदुकप्पे । तित्तियएक्केक्किंदियणामा उडु आदि तेवट्ठी" ॥

अतः परं प्रथमपटलव्याख्यानं क्रियते । ऋजुविमानं यदुक्तं पूर्वं मेरुचूलिकाया उपरि तस्य मनुष्यक्षेत्रप्रमाणविस्तारस्येन्द्रकसंज्ञा । तस्य चतुर्दिग्भागेष्वसंख्येययोजनविस्तारा-

---

इस प्रकार समुदायसे सोलह स्वर्गोंमें बारह इन्द्र जानने चाहिये । सोलह स्वर्गोंसे ऊपर एक रज्जुमें नव ग्रैवेयक, नव अनुदिश और पांच अनुत्तर विमानोंमें निवास करनेवाले देव हैं । उसके आगे इस एक रज्जुमें ही बारह योजन चलेजानेपर आठ योजन प्रमाण मोटाईकी धारक और मनुष्यलोक ( ढाईद्वीप )के समान पैंतालीस लाख ४५००००० योजन प्रमाण विस्तारकी धारक मोक्षशिला है । उस मोक्षशिलाके ऊपर घनोदधि, घनवात तथा तनुवात नामक तीन वात ( वायु ) हैं । इनमें जो तनुवात है, वहांपर लोकके अंतभागमें केवलज्ञान आदि अनंत गुणोंसहित श्रीसिद्ध परमेष्ठी निवास करते हैं ॥

अब स्वर्गके पटलोंकी संख्याका वर्णन करते हैं । सौधर्म और ईशान इन दो स्वर्गोंमें इकतीस ३१ पटल हैं, सानत्कुमार तथा माहेन्द्रमें सात ७ पटल हैं, ब्रह्म और ब्रह्मोत्तरमें चार पटल हैं, लान्तव तथा कापिष्टमें दो पटल हैं, शुक्र और महाशुक्रमें एक पटल है, शतार और सहस्रारमें एक पटल है, आनत तथा प्राणतमें तीन पटल हैं और आरण तथा अच्युत इन दो स्वर्गोंमें भी तीन पटल हैं । नव ग्रैवयकोंमें नौ पटल हैं, नव अनुदिशोंमें एक पटल है, और पंचानुत्तरोंमें एक पटल है । ऐसे समुदायसे ऊपर ऊपर तिरेसठ (६३) पटल जानने चाहिये । सोही कहा है-"सौधर्म युग्ममें ३१, सानत्कुमार युगलमें ७, ब्रह्मयुगलमें ४, लांतव युग्ममें २, शुक्र युग्ममें १, शतार युग्ममें १, आनत आदि चार स्वर्गोंमें ६, प्रत्येक तीनों ग्रैवेयकोंमें तीन तीन, नव अनुदिशोंमें एक, पंचानुत्तरोंमें एक, ऐसे समुदायसे ६३ इंद्रक होते हैं ।

इसके आगे प्रथम पटलका व्याख्यान किया जाता है । जो पहले मेरुकी चूलिकाके ऊपर ऋजु विमान कहा गया है उस मनुष्यक्षेत्र ( ढाईद्वीप ) प्रमाण विस्तारके धारक ऋजु

राणि पंक्तिरूपेण सर्वद्वीपसमुद्रेषूपरि प्रतिदिशं यानि त्रिषष्टिविमानानि तिष्ठन्ति तेषां श्रेणीबद्धसंज्ञा । यानि च पंक्तिरहितपुष्पप्रकरवद्विदिक्चतुष्टये तिष्ठन्ति तेषां संख्येयासंख्येययोजनविस्ताराणां प्रकीर्णकसंज्ञेति समुदायेन प्रथमपटललक्षणं ज्ञातव्यम् । तत्र पूर्वापरदक्षिणश्रेणित्रयविमानानि । तन्मध्ये विदिग्द्वयविमानानि च सौधर्मसंबंधीनि भवन्ति, शेषविदिग्द्वयविमानानि च पुनरीशानसंबन्धीनि । अस्मात्पटलादुपरि जिनदृष्टमानेन संख्येयान्यसंख्येयानि योजनानि गत्वा तेनैव क्रमेण द्वितीयादिपटलानि भवन्ति । अयं च विशेषः—श्रेणीचतुष्टये पटले पटले प्रतिदिशमेकैकविमानं हीयते यावत्पञ्चानुत्तरपटले चतुर्दिक्ष्वेकैकविमानं तिष्ठति । एते सौधर्मादिविमानाश्चतुरशीतिलक्षसप्तनवतिसहस्रत्रयोविंशतिप्रमिता अकृत्रिमसुवर्णमयजिनगृहमण्डिता ज्ञातव्या इति ।

अथ देवानामायुःप्रमाणं कथ्यते । भवनवासिषु जघन्येन दशवर्षसहस्राणि, उत्कर्षेण पुनरसुरकुमारेषु सागरोपमम्, नागकुमारेषु पल्यत्रयं, सुपर्णे सार्धद्वयं, द्वीपकुमारे द्वयं, शेषकुलषट्के सार्धपल्यमिति । व्यन्तरे जघन्येन दशवर्षसहस्राणि, उत्कर्षेण पल्यमधिकमिति । ज्योतिष्कदेवे जघन्येन पल्याष्टमविभागः, उत्कर्षेण चन्द्रे लक्षवर्षाधिकं पल्यं,

---

विमानकी इंद्रक यह संज्ञा है । उसकी चारों दिशाओंके भागमें जो प्रत्येक दिशामें सब द्वीप समुद्रोंके ऊपर असंख्यात योजन विस्तारके धारक पंक्तिरूपसे तिरेसठ ६३ विमान हैं उनकी श्रेणीबद्ध संज्ञा है । और जो विमान पंक्तिसे विना पुष्पोंके प्रकरके समान चारों विदिशाओंमें हैं उन संख्यात, असंख्यात योजन प्रमाण विस्तारवाले विमानोंकी प्रकीर्णक संज्ञा है । ऐसे समुदायसे प्रथम पटलका लक्षण जानना चाहिये । उन विमानोंमें जो पूर्व, पश्चिम और दक्षिण इन तीन श्रेणियोंके विमान हैं वे, और इन तीनों दिशाओंके बीचमें जो दो विदिशाओंमें स्थित विमान हैं ये सब प्रथम सौधर्म स्वर्ग संबंधी हैं । तथा शेष दो विदिशाओंके विमान और उत्तर श्रेणीके विमान जो हैं वे ईशान स्वर्ग संबंधी हैं । इस पटलके ऊपर भगवान् के द्वारा देखे हुए प्रमाणके अनुसार संख्यात तथा असंख्यात योजन जाकर इसी पूर्वोक्त क्रमसे द्वितीय, तृतीय, आदि पटल होते हैं । और विशेष यह है कि पटल पटलमें प्रत्येक दिशाकी प्रत्येक श्रेणीमें एक एक विमान घटता है सो यहांतक घटता है कि पंचानुत्तर पटलमें चारों दिशाओंमें एक एक ही विमान रह जाता है । और ये सब सौधर्म स्वर्ग आदि संबंधी विमान चौरासी लाख सत्तानवे हजार तेईस ८४९७०२३ संख्या प्रमाण हैं । और अकृत्रिम सुवर्णमय जिनचैत्यालयोंसे मंडित हैं ऐसे जानने चाहिये ॥

अब देवोंके आयुका प्रमाण कहते हैं । भवनवासियोंमें न्यूनसे न्यून दश हजार वर्षका जघन्य आयु होता है और उत्कर्षसे असुरकुमारोंमें एक सागर, नागकुमारोंमें तीन पल्य, सुपर्णकुमारोंमें ढाई पल्य, द्वीपकुमारोंमें दो पल्य और बाकी जो ६ प्रकारके भवनवासी हैं उनमें डेढ़ पल्य प्रमाण आयु है । व्यन्तरोंमें दश हजार वर्षका जघन्य और कुछ अधिक एक पल्यका उत्कृष्ट आयु है । ज्योतिष्क देवोंमें जघन्य आयु पल्यके आठवें भाग प्रमाण

सूर्ये सहस्राधिकं पल्यं शेषज्योतिष्कदेवानामागमानुसारेणेति । अथ सौधर्मैशानयोर्जघन्येन साधिकपल्यं, उत्कर्षेण साधिकसागरोपमद्वयं. सानत्कुमारमाहेन्द्रयोः साधिकसागरोपमसप्तकं, ब्रह्मब्रह्मोत्तरयोः साधिकसागरोपमदशकं, लान्तवकापिष्ठयोः साधिकानि चतुर्दशसागरोपमानि, शुक्रमहाशुक्रयोः षोडश साधिकानि, शतारसहस्रारयोरष्टादश साधिकानि, आनतप्राणतयोर्विंशतिरेव, आरणाच्युतयोर्द्वाविंशतिरिति । अतः परमच्युतादूर्ध्वं कल्पातीतनवग्रैवेयकेषु द्वाविंशतिसागरोपमप्रमाणादूर्ध्वमेकैकसागरोपमे वर्धमाने सत्येकत्रिंशत्सागरोपमान्यवसाननवग्रैवेयके भवन्ति । नवानुदिशपटले द्वात्रिंशत्, पञ्चानुत्तरपटले त्रयस्त्रिंशत् उत्कृष्टायुःप्रमाणं ज्ञातव्यम् । तदायुः सौधर्मादिषु स्वर्गेषु यदुत्कृष्टं तत्परस्मिन् परस्मिन् स्वर्गे सर्वार्थसिद्धिं विहाय जघन्यं चेति । शेषं विशेषव्याख्यानं त्रिलोकसारादौ बोद्धव्यम् ॥

किञ्च आदिमध्यान्तमुक्ते शुद्धबुद्धैकस्वभावे परमात्मनि सकलविमलकेवलज्ञानलोचनेनादर्शे विम्बानीव शुद्धात्मादिपदार्था लोक्यन्ते दृश्यते ज्ञायन्ते परिच्छिद्यन्ते यतस्तेन

---

है; उत्कृष्टतासे चन्द्रमामें एक पल्य एक लाख वर्ष और सूर्यमें एक पल्य एक हजार वर्षका आयु है । शेष ज्योतिष्क देवोंका उत्कृष्ट आयु आगमके अनुसार जानना चाहिये । अब कल्पवासियोंमें जो सौधर्म तथा ईशान स्वर्गके देव हैं उनके जघन्यतासे कुछ अधिक एक पल्य और उत्कृष्टतासे कुछ अधिक दो सागर प्रमाण आयु है । सानत्कुमार तथा माहेन्द्र देवोंमें कुछ अधिक सात सागर प्रमाण उत्कृष्ट आयु है । ब्रह्म और ब्रह्मोत्तरमें कुछ अधिक दश सागर, लांतव कापिष्टमें कुछ अधिक चौदह सागर, शुक्र महाशुक्रमें कुछ अधिक सोलह सागर, शतार और सहस्रारमें किंचित् अधिक अठारह सागर, आनत तथा प्राणतमें पूरे बीस ही सागर, और आरण अच्युतमें बाईस २२ सागर प्रमाण आयु है । अब इसके अनंतर अच्युत स्वर्गके ऊपर कल्पातीत जो नव ग्रैवेयक हैं उनमें प्रत्येक ग्रैवेयकमें बाईस सागर प्रमाण आयुमें क्रमानुसार एक एक सागर बढ़ाये जानेपर अंतके नवें ग्रैवेयकमें इकतीस सागर प्रमाण उत्कृष्ट आयु होता है । ९ अनुदिशोंके पटलमें बत्तीस सागर और पंचानुत्तर पटलमें तेतीस सागर जितना उत्कृष्ट आयुका प्रमाण जानना चाहिये । और जो आयु सौधर्म आदि स्वर्गोंमें उत्कृष्ट है वह सर्वार्थसिद्धिके विना अन्य सब स्वर्गोंमें आगे आगे जघन्य है अर्थात् जो सौधर्म ईशान स्वर्गमें उत्कृष्ट कुछ अधिक दो सागर प्रमाण आयु है वह सनत्कुमार माहेन्द्रमें जघन्य है । इस क्रमसे सर्वार्थसिद्धिके पहले पहले जघन्य आयु जानना । इसके अतिरिक्त जो अधिक व्याख्यान है सो त्रिलोकसार आदिमें से समझना चाहिये ॥

और आदि मध्य तथा अन्तसे रहित, शुद्ध बुद्ध एक स्वभावका धारक जो परमात्मा है उसमें सकल ( पूर्ण ) रूपसे विमल ( स्वच्छ ) जो केवलज्ञान नामक नेत्र है उसके द्वारा जैसे दर्पणमें प्रतिबिम्बोंका भान होता है उसी प्रकार शुद्ध आत्मा आदि पदार्थ आलोके

कारणेन स एव निश्चयलोकस्तस्मिन्निश्चयलोकाख्ये स्वकीयशुद्धपरमात्मनि अवलोकनं वा स निश्चयलोकः।"सण्णाओ य तिलेस्सा इंदियविसयाय अट्टरुद्दाणि। णाणं च दुप्पउत्तं मोहो पावप्पदो होदि।१।" इति गाथोदितविभावपरिणाममादिं कृत्वा समस्तशुभाशुभसंकल्पविकल्पत्यागेन निजशुद्धात्मभावनोत्पन्नपरमाह्लादैकसुखामृतरसास्वादानुभवनेन च या भावना सैव निश्चयलोकानुप्रेक्षा। शेषा पुनर्व्यवहारेणेत्येवं संक्षेपेण लोकानुप्रेक्षाव्याख्यानं समाप्तम् ॥

अथ बोधिदुर्लभानुप्रेक्षां कथयति। तथाहि एकेन्द्रियविकलेन्द्रियपञ्चेन्द्रियसंज्ञिपर्याप्तमनुष्यदेशकुलरूपेन्द्रियपटुत्वनिर्व्याध्यायुष्कवरबुद्धिसद्धर्मश्रवणग्रहणधारणश्रद्धानसंयमविषयसुखव्यावर्त्तनक्रोधादिकषायनिवर्त्तनेषु परं परं दुर्लभेषु कथंचित्काकतालीयकन्यायेन लब्धेष्वपि तल्लब्धिरूपबोधेः फलभूतस्वशुद्धात्मसंवित्त्यात्मकनिर्मलधर्मध्यानशुक्लध्यानरूपः परमसमाधिर्दुर्लभः। कस्मादिति चेत्तत्प्रतिबन्धकमिथ्यात्वविषयकषायनिदानबन्धादिविभावपरिणामानां प्रबलत्वादिति। तस्मात्स एव निरन्तरं भावनीयः। तद्भावनारहितानां पुनरपि संसारे पतनमिति। तथा चोक्तम्—"इत्यतिदुर्लभरूपां बोधिं लब्ध्वा यदि प्रमादी स्यात्। संसृतिभीमारण्ये भ्रमति वराको नरः सुचिरम्।१।" पुनश्चोक्तं मनुष्यभवदुर्लभत्वम्—"अशुभपरि-

---

जाते हैं अर्थात् देखे जाते हैं, जाने जाते हैं, परिच्छिन्न किये जाते हैं, इस कारण वह निज शुद्ध आत्मा ही निश्चयलोक है अथवा उस निश्चयलोक नामके धारक निज शुद्ध परमात्मामें जो अवलोकन (देखना) है वह निश्चयलोक है। "संज्ञा, तीन लेश्या, इंद्रियोंके वशीभूतपना, आर्त्त, रौद्र ध्यान तथा दुष्प्रयुक्त ज्ञान और मोह ये सब पापको देनेवाले होते हैं।" इस गाथामें कहे हुए विभाव परिणामको आदि लेकर, संपूर्ण जो शुभ तथा अशुभ रूप संकल्प विकल्प हैं उनके त्यागसे और निजशुद्ध आत्माकी भावनासे उत्पन्न जो परम आह्लादरूप एक सुखरूपी अमृतके आस्वादका अनुभव है उससे जो भावना होती है वही निश्चयसे लोकानुप्रेक्षा है। और इसके अतिरिक्त शेष जो पूर्वोक्त भावना है वह व्यवहारसे है। इस प्रकार संक्षेपसे लोकानुप्रेक्षाका वर्णन समाप्त हुआ॥

अब बोधिदुर्लभ अनुप्रेक्षाका कथन करते हैं, सो इस प्रकार है-एकेन्द्रिय, विकलेंद्रिय, पंचेन्द्रिय, संज्ञी पर्याप्त, मनुष्य, देश, कुल, रूप, इंद्रियोंमें पटुता, नीरोग, आयु, उत्तम बुद्धि, उत्तम धर्मका सुनना, ग्रहण करना, धारण करना, श्रद्धान करना, संयम, विषयसुखोंसे रहित होना, क्रोध आदि कषायोंका दूर होना, ये जो पूर्वोक्त सब हैं, इनमें पूर्व पूर्व की अपेक्षा पर पर अर्थात् एकेन्द्रियताकी अपेक्षा विकलेन्द्रियता आदि दुर्लभ हैं। यदि कथंचित् काकतालीय न्यायसे इन सबकी प्राप्ति होजाय तो भी इन सबकी प्राप्तिरूप जो ज्ञान है उसमें फलभूत जो निजशुद्ध आत्माके ज्ञानस्वरूप निर्मल धर्मध्यान तथा शुक्ल ध्यानरूप परमसमाधि है वह दुर्लभ है। परमसमाधि दुर्लभ क्यों है ऐसी शंका करो तो समाधान यह है कि-परम समाधिको रोकनेवाले मिथ्यात्व, विषय, कषाय, निदानबंध आदि

णामबहुलता लोकस्य विपुलता महामहती। योनिविपुलता च कुरुते सुदुर्लभां मानुषीं योनिम्। १" बोधिसमाधिलक्षणं कथ्यते—सम्यग्दर्शनज्ञानचारित्राणामप्राप्तप्रापणं बोधिस्तेषामेव निर्विघ्नेन भवान्तरप्रापणं समाधिरिति। एवं संक्षेपेण दुर्लभानुप्रेक्षा समाप्ता।

अथ धर्मानुप्रेक्षां कथयति। तद्यथा–संसारे पतन्तं जीवमुद्धृत्य नागेन्द्रनरेन्द्रदेवेन्द्रादिवन्द्ये अव्याबाधानन्तसुखाद्यनन्तगुणलक्षणे मोक्षपदे धरतीति धर्मः। तस्य च भेदाः कथ्यते—अहिंसालक्षणः सागारानगारलक्षणो वा उत्तमक्षमादिलक्षणो वा निश्चयव्यवहाररत्नत्रयात्मको वा शुद्धात्मसंवित्त्यात्मकमोहक्षोभरहितात्मपरिणामो वा धर्मः। अस्य धर्मस्यालाभेऽतीतानन्तकाले "णिच्चिदरधाउसत्तय तरुदस वियलेंदियेसु छच्चेव। सुरणिरयतिरियचउरो चउदस मणुयेसु सदसहस्सा। १।" इति गाथाकथितचतुरशीतियोनि-

---

जो विभाव परिणाम हैं उनकी जीवके प्रबलता है इसलिये परम समाधिका होना दुर्लभ है। इस कारण उस परम समाधिकी दुर्लभताकी ही निरंतर भावना करनी चाहिये। क्योंकि, जो जीव उसकी भावना नहीं करते उनका फिर भी संसारमें पतन होता है। सो ही कहा है–कि "जो मनुष्य अत्यन्त दुर्लभरूप बोधिको प्राप्त होकर, प्रमादी होता है वह वराक (दीन-जीव) संसाररूपी भयंकर वनमें चिरकाल तक भ्रमण करता है। १।" और पुनः मनुष्यभवकी दुर्लभताके विषयमें कहा है–"अशुभ परिणामोंकी अधिकता, संसारकी विशालता, और बड़ी बड़ी योनियोंकी अधिकता ये सब मनुष्ययोनिको दुर्लभ करती हैं; अर्थात् जीवोंके अशुभ परिणाम बहुत हैं, तीनों लोकोंमें उनके लिये स्थान बहुत हैं और उत्पन्न होनेको योनियां भी अधिक हैं, अतः मनुष्यभवका प्राप्त होना दुर्लभ है। अब बोधि और समाधिका लक्षण कहते हैं। पहले नहीं मिले हुए जो सम्यग्दर्शन, सम्यग्ज्ञान और सम्यक्चारित्र हैं इनका जो मिलना है वह तो बोधि कहलाती है और उन्हीं सम्यग्दर्शनादिकोंको निर्विघ्नता पूर्वक जो अन्य भवमें साथ ले जाना सो समाधि है।' ऐसे संक्षेपसे दुर्लभ अनुप्रेक्षाका कथन समाप्त किया ॥

अब धर्मानुप्रेक्षाका कथन करते हैं। वह इस प्रकार है—संसारमें गिरते हुए जीवको उठाकर जो धरणेन्द्र, चक्रवर्त्ती, देव, इन्द्र आदिकोंके पूज्य पदमें अथवा बाधारहित अनंत सुख आदि अनंत गुणोंरूप लक्षणका धारक जो मोक्षपद है उसमें धरता है वह धर्म है। अब उस धर्मके भेद कहे जाते हैं-अहिंसारूप लक्षणका धारक धर्म है, गृहस्थ और मुनि इन दो भेदोंवाला धर्म है, अथवा उत्तम क्षमा आदि लक्षणवाला दश प्रकारका धर्म है अथवा निश्चय और व्यवहाररूप रत्नत्रयस्वरूप धर्म है, अथवा शुद्ध आत्माके ज्ञानस्वरूप जो मोह तथा क्षोभरहित आत्माका परिणाम है उसरूप धर्म है। इस धर्मकी प्राप्ति न होनेसे अतीत (गये हुए) अनंत कालमें "नित्यनिगोद वनस्पतिमें ७ लाख, इतर निगोद वनस्पतिमें ७ लाख, पृथ्वीकायमें ७ लाख, जलकायमें ७ लाख, तेजकायमें ७ लाख, वायुका-

लक्षेषु मध्ये परमस्वास्थ्यभावनोत्पन्ननिर्व्याकुलपारमार्थिकसुखविलक्षणानि पञ्चेन्द्रियसुखाभिलाषजनितव्याकुलत्वोत्पादकानि दुःखानि सहमानः सन् भ्रमितोऽयं जीवो यदा पुनरेवंगुणविशिष्टस्य धर्मस्य लाभो भवति तदा राजाधिराजार्द्धमाण्डलिकमहामाण्डलिकबलदेववासुदेवकामदेवसकलचक्रवर्त्तिदेवेन्द्रगणधरदेवतीर्थंकरपरमदेवप्रथमकल्याणत्रयपर्यन्तं विविधाभ्युदयसुखं प्राप्य पश्चादभेदरत्नत्रयभावनाबलेनाक्षयानन्तसुखादिगुणास्पदमर्हत्पदं सिद्धपदं च लभते तेन कारणेन धर्म एव परमरसरसायनं निधिनिधानं कल्पवृक्षः कामधेनुश्चिन्तामणिरिति। किं बहुना, ये जिनेश्वरप्रणीतं धर्मं प्राप्य दृढमतयो जातास्त एव धन्याः। तथा चोक्तम्—"धन्या ये प्रतिबुद्धा धर्मे खलु जिनवरैः समुपदिष्टे। ये प्रतिपन्ना धर्मं स्वभावनोपस्थितमनीषाः। १।" इति संक्षेपेण धर्मानुप्रेक्षा समाप्ता॥

इत्युक्तलक्षणा अनित्याशरणसंसारैकत्वान्यत्वाशुचित्वास्रवसंवरनिर्जरालोकबोधिदुर्लभधर्मतत्त्वानुचिन्तनसंज्ञा निरास्रवशुद्धात्मतत्त्वपरिणतिरूपस्य संवरस्य कारणभूता द्वादशानुप्रेक्षाः समाप्ताः॥

---

वमें ७ लाख, प्रत्येक वनस्पतिमें १० लाख, बे इन्द्री, ते इन्द्री और चौ इन्द्री इनमें दो दो लाख देव, नारकी और तिर्यंच इन तीनोंमें चार चार लाख तथा मनुष्योंमें चौदह लाख योनि हैं। १। इस गाथामें कही हुई चौरासी लाख योनियोंमें परम स्वास्थ्यकी भावनासे उत्पन्न, व्याकुलतारहित ऐसे पारमार्थिक सुखसे विलक्षण (भिन्न) और पांचों इन्द्रियोंके सुखोंकी अभिलाषा (वांछा) से उत्पन्न, व्याकुलताको पैदा करनेवाले ऐसे जो दुःख हैं उनको सहते हुए इस जीवने परिभ्रमण किया। जब इस जीवको पूर्वोक्त प्रकारके धर्मकी प्राप्ति होती है तब राजाधिराज, महाराज, अर्धमंडलेश्वर, महामंडलेश्वर, बलदेव, नारायण, कामदेव, चक्रवर्त्ती, देव, इन्द्र गणधर देव, तीर्थंकर परम देवके पदों तथा तीर्थंकरोंके गर्भ, जन्म तथा तप कल्याणकों पर्यन्तके जो अनेक प्रकारके अभ्युदय सुख हैं उन सुखोंको प्राप्त होकर, तदनन्तर अभेद रत्नत्रयकी भावनाके बलसे अक्षय और अनंत गुणोंका स्थान जो अरहंत पद है उसको और सिद्ध पदको प्राप्त होता है। इस कारण धर्म ही परम रसका रसायन है, धर्म ही निधियोंका निधान (भंडार) है, धर्म ही कल्पवृक्ष है, धर्म ही कामधेनु गाय है और धर्म ही चिंतामणि रत्न है। विशेष क्या कहें, जो जिनेश्वरके कहे हुए धर्मको प्राप्त होकर, दृढ बुद्धिके धारक (सम्यग्दृष्टी) हुए हैं वे ही धन्य हैं। सोही कहा है—"जिन्होंने जिनवरसे उपदिष्ट धर्मको जाना है और आत्मज्ञानमें तत्पर बुद्धिके धारक जिन्होंने उस धर्मको ग्रहण किया है वे सब धन्य हैं। १।" इस प्रकार संक्षेपसे धर्मानुप्रेक्षा समाप्त हुई।

इस प्रकार पूर्वोक्त लक्षणकी धारक अनित्य, अशरण, संसार, एकत्व, अन्यत्व, अशुचित्व, आस्रव, संवर, निर्जरा, लोक, बोधिदुर्लभ और धर्मतत्त्व, इनका अनुचिंतन

अथ परीषहजयः कथ्यते—क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याक्रोशवधयाचनालाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाज्ञानादर्शनानीति द्वाविंशतिपरीषहा विज्ञेयाः। तेषां क्षुधादिवेदनानां तीव्रोदयेऽपि सुखदुःखजीवितमरणलाभालाभनिन्दाप्रशंसादिसमतारूपपरमसामायिकेन नवतरशुभाशुभकर्मसंवरणचिरन्तनशुभाशुभकर्मनिर्जरणसमर्थेनायं निजपरमात्मभावनासंजातनिर्विकारनित्यानन्दलक्षणसुखामृतसंवित्तेरचलनं स परीषहजय इति ॥

अथ चारित्रं कथयति। शुद्धोपयोगलक्षणनिश्चयरत्नत्रयपरिणते स्वशुद्धात्मस्वरूपे चरणमवस्थानं चारित्रम्। तच्च तारतम्यभेदेन पञ्चविधम्। तथाहि—सर्वे जीवाः केवलज्ञानमया इति भावनारूपेण समतालक्षणं समायिकम्। अथवा परमस्वास्थ्यबलेन युगपत्समस्तशुभाशुभसङ्कल्पविकल्पत्यागरूपसमाधिलक्षणं वा, निर्विकारस्वसंवित्तिबलेन रागद्वेषपरिहाररूपं वा, स्वशुद्धात्मानुभूतिबलेनार्त्तरौद्रपरित्यागरूपं वा. समस्तसुखदु.खादिमध्यस्थरूपं चेति। अथ छेदोपस्थापनं कथयति—यदा युगपत्समस्तविकल्पत्यागरूपे परमसामायिके स्थातुमशक्तोऽयं जीवस्तदा समस्तहिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतमित्यनेन पञ्चप्र-

---

(विचार)रूप है नाम जिनका ऐसी और आस्रवरहित-शुद्ध आत्मतत्त्वकी परिणतिरूप जो संवर है उसकी कारणरूप ऐसी बारह अनुप्रेक्षा (भावना) समाप्त हुई ॥

अब परीषहोंका जय (जीतना) जो है उसका कथन करते हैं-क्षुधा १ प्यास २ शीत ३ उष्ण (गर्मी) ४ दंश मशक ५ नग्नता ६ अरति ७ स्त्री ८ चर्या (गमन) ९ निषद्या (वस्ती) १० शय्या ११ आक्रोश (कटु वचन) १२ वध (मारण) १३ याचना १४ अलाभ १५ रोग १६ तृणस्पर्श १७ मल १८ सत्कारपुरस्कार १९ प्रज्ञा २० अज्ञान २१ और अदर्शन २२ ये बाईस परीषह जानने चाहिये। इन क्षुधा तृषा आदि वेदनाओंके तीव्र उदय होनेपर भी सुख दुःख, जीवन मरण, लाभ अलाभ, निंदा प्रशंसा आदिमें समानतारूप जो नवीन शुभ तथा अशुभ कर्मोंको रोकनेमें और पुराने शुभ अशुभ कर्मोंके निर्जरण करनेमें समर्थ ऐसा परम सामायिक है उस करके निज परमात्माकी भावनासे उत्पन्न विकाररहित नित्यानंदरूप लक्षणका धारक जो सुखामृत है उसके ज्ञानसे जो नहीं चलना सो परीषहजय है ॥

अब चारित्रका निरूपण करते हैं। शुद्ध उपयोग स्वरूप जो निश्चय रत्नत्रय उसमें परिणत जो आत्मरूप उसमें जो चरण कहिये स्थित होना सो चारित्र है। वह तारतम्य भेदसे पांच प्रकारका है। सोही दिखाते हैं-सब जीव केवलज्ञानमय हैं ऐसी भावनारूपसे जो समतालक्षण परिणामका करना सो सामायिक है। अथवा परम स्वास्थ्यके बलसे एक ही समयमें संपूर्ण शुभ और अशुभ संकल्प विकल्पोंका त्यागरूप जो समाधि (ध्यान) है वह है लक्षण जिसका सो सामायिक है। अथवा विकाररहित आत्मज्ञानके बलसे जो राग

कारविकल्पभेदेन व्रतच्छेदेन रागादिविकल्परूपसावद्येभ्यो निवर्त्य निजशुद्धात्मन्यात्मानमुपस्थापयतीति छेदोपस्थापनम् । अथवा छेदे व्रतखण्डे सति निर्विकारसंवित्तिरूपनिश्चयप्रायश्चित्तेन तत्साधकबहिरङ्गव्यवहारप्रायश्चित्तेन वा स्वात्मन्युपस्थापनं छेदोपस्थापनमिति । अथ परिहारविशुद्धिं कथयति—"तीसं वासा जम्मे वासपुहुत्तं च तित्थयरमूले । पच्चक्खाणं पढिदो संज्झूण दुगाउ अ विहारो । १ ।" इति गाथाकथितक्रमेण मिथ्यात्वरागादिविकल्पमलानां प्रत्याख्यानेन परिहारेण विशेषेण स्वात्मनः शुद्धिर्नैर्मल्यं परिहारविशुद्धिश्चारित्रमिति । अथ सूक्ष्मसाम्परायचारित्रं कथयति । सूक्ष्मातीन्द्रियनिजशुद्धात्मसंवित्तिबलेन सूक्ष्मलोभाभिधानसाम्परायस्य कषायस्य यत्र निरवशेषोपशमनं क्षपणं वा तत्सूक्ष्मसाम्परायचारित्रमिति । अथ यथाख्यातचारित्रं कथयति—यथा सहजशुद्धस्वभावत्वेन निष्कम्पत्वेन निष्कषायमात्मस्वरूपं तथैवाख्यातं कथितं यथाख्यातचारित्रमिति ॥

---

और द्वेषका परिहार ( त्याग ) है उसरूप सामायिक है। अथवा शुद्ध आत्माके अनुभवके बलसे आर्त्त तथा रौद्र ध्यानका त्याग करने स्वरूप सामायिक है । अथवा समस्त सुख तथा दुःखोंमें जो मध्यस्थ रहना तद्रूप सामायिक है । अब छेदोपस्थापन नामक चारित्रके द्वितीय भेदका वर्णन करते हैं—जब एकही समयमें संपूर्ण विकल्पोंके त्यागरूप परम सामायिकमें स्थित होनेको यह जीव असमर्थ होता है तब "समस्त हिंसा, अनृत ( असत्य ), स्तेय ( चोरी ), अब्रह्म तथा परिग्रह इन पांचोंसे जो विरति (रहितता) सो व्रत है ।" इस कथनके अनुसार विकल्पभेदसे पांच प्रकारके व्रतोंका छेदन होनेपर जो राग आदि विकल्परूप सावद्योंसे जीवको छुड़ाकर निज शुद्ध आत्मामें उपस्थापन करै सो छेदोपस्थापन है। अथवा छेद अर्थात् व्रतका खंडन (भंग वा नाश) होनेपर निर्विकार निज आत्माके ज्ञानरूप निश्चय प्रायश्चित्तके बलसे अथवा व्यवहार प्रायश्चित्त जो निज आत्मामें स्थितिका होना सो छेदोपस्थापन है । अब परिहारविशुद्धिका कथन करते हैं "जो जन्मसे ३० वर्ष तककी अवस्थाको सुखमें व्यतीत करके वर्षपृथक्त्व ( ८ वर्ष ) पर्यन्त तीर्थंकरके चरणोंमें प्रत्याख्यानको पढ़कर तीनों संध्याकालोंको छोड़कर प्रतिदिन दो कोश गमन करता है, उस मुनिके परिहारविशुद्धि संयम होता है ॥ १ ॥"

इस गाथामें कहे हुए क्रमानुसार मिथ्यात्व, राग इत्यादिक जो विकल्प-मल हैं उनका प्रत्याख्यान ( परिहार अथवा त्याग ) करके अधिकताके साथ जो आत्माकी शुद्धि अर्थात् निर्मलता है सो परिहारविशुद्धिनामक तृतीय चारित्र है । अब सूक्ष्म सांपराय चारित्रका कथन करते हैं—सूक्ष्म, इन्द्रियोंके अगोचर ऐसा जो निज शुद्ध आत्मा उसके ज्ञानके बलसे सूक्ष्म लोभ नामक सांपरायकषायका जहांपर पूर्णरूपसे उपशमन अथवा क्षपण (नाश) होता है वह सूक्ष्मसांपराय चारित्र है । अब यथाख्यात चारित्रका वर्णन करते हैं-जैसा

इदानीं सामायिकादिचारित्रपञ्चकस्य गुणस्थानस्वामित्वं कथयति । प्रमत्ताप्रमत्तापूर्वानिवृत्तिसंज्ञगुणस्थानचतुष्टये सामायिकचारित्रं भवति छेदोपस्थापनञ्च, परिहारविशुद्धिस्तु प्रमत्ताप्रमत्तगुणस्थानद्वये, सूक्ष्मसांपरायचारित्रं पुनरेकस्मिन्नेव सूक्ष्मसाम्परायगुणस्थाने, यथाख्यातचारित्रमुपशान्तकषायक्षीणकषायसयोगिजिनायोगिजिनाभिधानगुणस्थानचतुष्टये भवतीति । अथ संयमप्रतिपक्षं कथयति-संयमासंयमसंज्ञं दार्शनिकाद्यैकादशभेदभिन्नं देशचारित्रमेकस्मिन्नेव पञ्चमगुणस्थाने ज्ञातव्यम् । असंयमस्तु मिथ्यादृष्टिसासादनमिश्राविरतसम्यग्दृष्टिसंज्ञगुणस्थानचतुष्टये भवति, इति चारित्रव्याख्यानं समाप्तम् ॥

एवं व्रतसमितिगुप्तिधर्मद्वादशानुप्रेक्षापरीषहजयचारित्राणां भावसंवरकारणभूतानां यद्व्याख्यानं कृतं, तत्र निश्चयरत्नत्रयसाधकव्यवहाररत्नत्रयरूपस्य शुभोपयोगस्य प्रतिपादकानि यानि वाक्यानि तानि पापास्रवसंवरणानि ज्ञातव्यानि । यानि तु व्यवहाररत्नत्रयसाध्यस्य शुद्धोपयोगलक्षणनिश्चयरत्नत्रयस्य प्रतिपादकानि तानि पुण्यपापद्वयसंवरकारणानि भवन्तीति ज्ञातव्यम् । अत्राह सोमनामराजश्रेष्ठी । भगवन्नेतेषु व्रतादिसंवरकारणेषु मध्ये

---

निष्कंप सहजशुद्ध स्वभावसे कषायरहित आत्माका स्वरूप है वैसा ही आख्यात अर्थात् कहा गया हो सो यथाख्यात चारित्र है ॥

अब सामायिक आदि जो पांच चारित्र हैं उनके गुणस्थानोंके स्वामित्वका अर्थात् किस २ गुणस्थानमें कौन कौन सा चारित्र होता है इस विषयक कथन करते हैं। प्रमत्त ६ अप्रमत्त ७ अपूर्वकरण ८ और अनिवृत्तिकरण ९ नामक जो चार गुणस्थान हैं इनमें सामायिक और छेदोपस्थापन ये दो चारित्र होते हैं। और परिहारविशुद्धि नामक चारित्र तो प्रमत्त तथा अप्रमत्त इन दो गुणस्थानोंमें ही होता है, और सूक्ष्मसांपराय चारित्र भी एक ही सूक्ष्मसांपराय नामक दशम गुणस्थानमें होता है, तथा यथाख्यात चारित्र जो है वह उपशांत कषाय ११, क्षीणकषाय १२, सयोगिजिन १३, और अयोजिन १४ नामोंके धारक जो चार गुणस्थान हैं उनमें होता है। अब संयमके प्रतिपक्षी जो संयमासंयम और असंयम हैं वे किस किस गुणस्थानमें होते हैं यह वर्णन करते हैं। दार्शनिक आदि एकादश प्रतिमारूप एकादश भेदोंसे भेदको प्राप्त हुआ जो संयमासंयम नामक देशचारित्र है वह एक पंचम गुणस्थानमें ही जानना चाहिये। और असंयम जो है वह तो मिथ्यादृष्टी १, सासादन २, मिश्र ३ और अविरत सम्यग्दृष्टी ४ नामक चार गुणस्थानोंमें होता है। ऐसे चारित्रका व्याख्यान समाप्त हुआ ॥

इस पूर्वोक्त प्रकारसे भावसंवरके कारणभूत व्रत, समिति, गुप्ति, धर्म, द्वादशानुप्रेक्षा, परीषहजय और चारित्र इन सबका जो व्याख्यान किया, उस व्याख्यानमें निश्चयरत्नत्रयको साधनेवाला जो व्यवहार रत्नत्रयरूप शुभोपयोग है उसका निरूपण करनेवाले जो वाक्य हैं वे तो पापास्रवके संवरमें कारण जानने चाहिये। और जो व्यवहार रत्नत्रयसे सिद्ध होने योग्य शुद्धोपयोग लक्षण निश्चयरत्नत्रयके प्रतिपादक वाक्य हैं वे पुण्य तथा

संवरानुप्रेक्षैव सारभूता, सा चैव संवरं करिष्यति किं विशेषप्रपञ्चेनेति । भगवानाह—त्रिगुप्तिलक्षणनिर्विकल्पसमाधिस्थानां यतीनां तथैव पूर्यते तत्रासमर्थानां पुनर्बहुप्रकारेण संवरप्रतिपक्षभूतो मोहो विजृम्भते तेन कारणेन व्रतादिविस्तरं कथयन्त्याचार्याः ॥३५॥ "असिदिसदं किरियाणं अक्किरियाणं तु होइ चुलसीदी । सत्तट्ठी अण्णाणी वेणइया हुंति बत्तीसं । १ । जोगा पयडिपदेसा ठिदिअणुभागा कसायदो हुंति । अपरिणदुच्छिण्णेसु अ बंधो ठिदिकारणं णत्थि । २ ।" एवं संवरतत्त्वव्याख्याने सूत्रद्वयेन तृतीयं स्थलं गतम् ॥

अथ सम्यग्दृष्टिजीवस्य संवरपूर्वकं निर्जरातत्त्वं कथयति,—

जह कालेण तवेण य भुत्तरसं कम्मपुग्गलं जेण ।
भावेण सडदि णेया तस्सडणं चेदि णिज्जरा दुविहा ॥ ३६ ॥

व्याख्या । 'णेया' इत्यादिव्याख्यानं क्रियते—"णेया" ज्ञातव्या । का ? "णिज्जरा" भाव-

---

पाप इन दोनों आस्रवोंके संवरके कारण होते हैं यह समझना चाहिये। यहां सोम नामक राजसेठ कहता है कि हे भगवान्! ये जो पूर्वोक्त व्रत, समिति आदिक संवरके कारण हैं इनमें संवरानुप्रेक्षा जो है सो ही सारभूत है और वही इस जीवके आस्रवका संवर कर देगी फिर आपने जो विशेष प्रपंच ( अधिक विस्तारसे कथन ) किया है, इससे क्या प्रयोजन है ? इस प्रश्न का उत्तर भगवान् नेमिचंद्र स्वामी देते हैं कि-मन वचन तथा काय इन तीनोंकी गुप्तिस्वरूप जो निर्विकल्प समाधि ( ध्यान ) है उसमें स्थित जो मुनि हैं उनके तो उस गुप्तिसे ही पूर्त्ति अर्थात् संवर हो जाता है और उसमें असमर्थ जो जीव हैं उनके नाना प्रकारसे संवरका प्रतिपक्षीभूत मोह उत्पन्न होता है इस कारण आचार्य व्रत आदिका कथन करते हैं ॥ ३५ ॥ क्रियावादियोंके एकसौ अस्सी १८०, अक्रियावादियोंके चौरासी ८४, अज्ञानियोंके सडसठ ६७ और वैनयिकोंके बत्तीस ३२, ऐसे कुल मिलाकर तीनसौ तिरेसठ भेद पाखंडियोंके हैं। १। योगसे प्रकृति और प्रदेश बंध होते हैं, कषायोंसे स्थिति तथा अनुभाग बंध होता है और जिसके कषायस्थान उदयरूप नही हैं तथा क्षीण होगये हैं ऐसे उपशांतकषाय व क्षीणकषाय और सयोगकेवली हैं उनमें तत्काल बंध स्थितिका कारण नहीं है। २। इस प्रकार संवर तत्त्वके व्याख्यानमें दो सूत्रोंद्वारा तृतीय स्थल समाप्त हुआ।

अब सम्यग्दृष्टी जीव संवर पूर्वक निर्जरा होती है इस कारण निर्जरा तत्त्वका कथन करते हैं।

गाथाभावार्थः—जिस आत्माके परिणामरूप भावसे कर्मरूपी पुद्गल फल देकर नष्ट होते हैं वह तो भावनिर्जरा है और सविपाक निर्जराकी अपेक्षासे यथाकाल अर्थात् काललब्धिरूप कालसे तथा अविपाक निर्जराकी अपेक्षासे तपसे जो कर्मरूप पुद्गलोंका नष्ट होना है सो द्रव्यनिर्जरा है ॥ ३६ ॥

निर्जरा। सा का ? निर्विकारपरमचैतन्यचिच्चमत्कारानुभूतिसञ्जातसहजानन्दस्वभावसुखामृतरसास्वादरूपो भाव इत्यध्याहारः। "जेण भावेण" येन भावेन जीवपरिणामेन। किं भवति "सडदि" विशीर्यते पतति गलति विनश्यति। किं कर्तृ "कम्मपुग्गलं" कर्मारिविध्वंसकस्वकीयशुद्धात्मनो विलक्षणं कर्मपुद्गलद्रव्यं। कथंभूतं "भुत्तरसं" स्वोदयकालं प्राप्य सांसारिकसुखदुःखरूपेण भुक्तरसं दत्तफलं। केन कारणभूतेन गलति "जह कालेण" स्वकालपच्यमानाम्रफलवत्सविपाकनिर्जरापेक्षया, अभ्यन्तरे निजशुद्धात्मसंवित्तिपरिणामस्य बहिरङ्गसहकारिकारणभूतेन काललब्धिसंज्ञेन यथाकालेन, न केवलं यथाकालेन "तवेण" अकालपच्यमानानामाम्रादिफलवदविपाकनिर्जरापेक्षया अभ्यन्तरेण समस्तपरद्रव्येच्छानिरोधलक्षणेन बहिरङ्गेणान्तस्तत्त्वसंवित्तिसाधकसंभूतेनानशनादिद्वादशविधेन तपसा चेति "तस्स" कर्मणो गलनं यच्च सा द्रव्यनिर्जरा। ननु पूर्वं यदुक्तं 'सडदि' तेनैव द्रव्यनिर्जरा लब्धा पुनरपि सडनं किमर्थं भणितम् ? तत्रोत्तरं—तेन सडदिशब्देन निर्मलात्मानुभूतिग्रहणभावनिर्जराभिधानपरिणामस्य सामर्थ्यमुक्तं न च द्रव्यनिर्जरेति। "इदि" इति द्रव्यभावरूपेण निर्ज्जरा द्विविधा भवति ॥

---

व्याख्यार्थः—"णेया" इत्यादि सूत्रका व्याख्यान करते हैं। "णेया" जानना चाहिये किसको "णिज्जरा" भावनिर्जराको। वह क्या है ? कि विकारोंसे रहित और परम चैतन्य रूप जो चित् चमत्कार है उसके अनुभवसे उत्पन्न जो सहज आनंद स्वभाव सुखामृतके आस्वादरूप भाव है उसरूप है। यहाँपर भाव शब्दका अध्याहार ( विवक्षासे ग्रहण ) किया गया है। "जेण भावेण" जिस जीवके परिणारूप भावसे क्या होता है कि "सडदि" जीर्ण होता है, गिरता है, गलता है अथवा नाशको प्राप्त होता है। कौन कर्त्ता ? "कम्मपुग्गलं" कर्मरूपी शत्रुओंका नाश करनेवाला जो निज शुद्ध आत्मा उससे विलक्षण कर्मरूपी पुद्गल द्रव्य, कैसा होके "भुत्तरसं" अपने उदयकालको प्राप्त होके संसार संबंधी सुख तथा दुःखरूपसे भुक्तरस अर्थात् दिया है रस जिसने ऐसा होकर, किस कारणसे गलता है ? "जह कालेण" अपने समयमें पकते हुए आम्रके फलके समान तो सविपाक निर्जराकी अपेक्षासे, और अन्तरंगमें निज शुद्ध आत्माके ज्ञानरूप परिणाम बहिरंग सहकारी कारणभूत जो काललब्धि है उस नामके धारक यथाकालसे, और केवल यथाकालसे ही नहीं किंतु "तवेण य" विना समय पकते हुये आम्र आदि फलोंके समान अविपाक निर्जराकी अपेक्षासे, तथा समस्त परद्रव्योंमें इच्छाके रोकनेरूप अभ्यंन्तर तपसे और अन्तस्तत्त्व (आत्मरूपत्व)के ज्ञानको साधनेवाले अनशन ( उपवास ) आदि द्वादश प्रकारके बहिरंग तपसे "तस्सडणं" उस कर्मका जो गलना सो द्रव्यनिर्जरा है। शंका—आपने जो पहले 'सडदि' ऐसा कहा है उसीसे द्रव्यनिर्जरा प्राप्त हो गई फिर 'सडन' इस शब्दका कथन क्यों किया ? इसका समाधान यह है कि पहले जो 'सडदि' शब्द कहा गया है उससे निर्मल आत्माके अनुभवको ग्रहण करनेरूप जो भावनिर्जरा नामक परिणाम है

अत्राह शिष्यः—सविपाकनिर्जरा नरकादिगतिष्वज्ञानिनामपि दृश्यते संज्ञानिनामेवेति नियमो नास्ति। तत्रोत्तरं—अत्रैव मोक्षकारणं या संवरपूर्विका निर्जरा सैव ग्राह्या। या पुनरज्ञानिनां निर्जरा सा गजस्नानवन्निष्फला। यतः स्तोकं कर्म निर्जरयति बहुतरं बध्नाति तेन कारणेन सा न ग्राह्या। या तु सरागसद्दृष्टीनां निर्जरा सा यद्यप्यशुभकर्मविनाशं करोति तथापि संसारस्थितिं स्तोकां कुरुते। तद्भवे तीर्थंकरप्रकृत्यादिविशिष्टपुण्यबन्धकारणं भवति पारम्पर्येण मुक्तिकारणं चेति। वीतरागसद्दृष्टीनां पुनः पुण्यपापद्वयविनाशे तद्भवेऽपि मुक्तिकारणमिति। उक्तं च श्रीकुन्दकुन्दाचार्यदेवैः "जं अण्णाणी कम्मं खवेदि भवसदसहस्सकोडीहिं। तं णाणी तिहिं गुत्तो खवेदि उस्सासमित्तेण। १।" कश्चिदाह—सद्दृष्टीनां वीतरागविशेषणं किमर्थं रागादयो हेया मदीया न भवन्तीति भेदविज्ञाने जाते सति रागानुभवेऽपि ज्ञानमात्रेण मोक्षो भवतीति। तत्र परिहारः। अन्धकारे पुरुषद्वयम् एकः प्रदीपहस्तस्तिष्ठति, अन्यः पुनरेकः प्रदीपरहितस्तिष्ठति। स च कूपे पतनं सर्पादिकं वा न जानाति तस्य विनाशे दोषो नास्ति। यस्तु प्रदीपहस्तस्तस्य कूपपतनादिविनाशे प्रदीपफलं नास्ति। यस्तु कूपपतनादिकं त्यजति तस्य प्रदीपफलमस्ति। तथा कोऽपि रागादयो हेया मदीया न भवन्तीति भेदविज्ञानं न जानाति स कर्मणा बध्यते तावत्, अन्यः कोऽपि रागादिभेदविज्ञाने जातेऽपि यावतांशेन रागादिकमनुभवति तावतांशेन सोऽपि बध्यत

---

उसका सामर्थ्य कहा गया और द्रव्यनिर्जराका कथन नहीं किया गया। 'इदि' इसप्रकार द्रव्य और भावरूपसे दो प्रकारकी निर्जरा जाननी चाहिये ॥

यहां शिष्य कहता है कि जो सविपाक निर्जरा है वह तो नरक आदि गतियोंमें अज्ञानियोंके भी होती हुई देख पड़ती है। इसलिये सम्यग्ज्ञानियोंके सविपाक निर्जरा होती है यह नियम नहीं है? इस विषयमें उत्तर यह है कि यहांपर जो संवर पूर्वक निर्जरा है उसीको ग्रहण करना चाहिये। क्योंकि, वही मोक्षका कारण है। और जो अज्ञानियोंके निर्जरा होती है वह तो गजस्नान (हाथीके स्नान) के समान निष्फल है। क्योंकि, अज्ञानी जीव थोड़े कर्मोंकी तो निर्जरा करता है और बहुतसे कर्मोंको बांधता है। इस कारण अज्ञानियोंकी सविपाक निर्जराका यहां ग्रहण नहीं करना चाहिये। तथा जो सराग सम्यग्दृष्टियोंके निर्जरा है वह यद्यपि अशुभ कर्मोंका नाश करती है और शुभ कर्मोंका नाश नहीं करती तथापि संसारकी स्थितिको अल्प करती है अर्थात् जीव के संसारपरिभ्रमणको घटाती है। उसी भवमें तीर्थंङ्कर प्रकृति आदि विशिष्ट पुण्यबंधका कारण हो जाती है और परंपरासे मोक्षकी कारणभूत होती है। और जो वीतराग सम्यग्दृष्टि हैं उनके पुण्य तथा पाप दोनोंका नाश होनेपर उसी भवमें वह सविपाक निर्जरा मोक्षकी कारण हो जाती है। सोही श्री कुन्दकुन्द आचार्य देवने कथन किया है—"अज्ञानी जिन कर्मोंका एक लाख करोड़ वर्षोंमें नाश करता है उन्हीं कर्मोंको ज्ञानी जीव मनोवचनकायकी गुप्तिका धारक होकर एक उच्छ्वास मात्रमें नष्ट कर देता है। १।" यहां कोई शंकाका

एव, तस्यापि रागादिभेदविज्ञानफलं नास्ति। यस्तु रागादिभेदविज्ञाने जाते सति रागादिकं त्यजति तस्य भेदविज्ञानफलमस्तीति ज्ञातव्यम्। तथा चोक्तं—"चक्खुस्स दंसणस्स य सारो सप्पादिदोसपरिहारो। चक्खू होदि णिरत्थं दट्ठूण विले पडंतस्स" ॥ ३६ ॥ एवं निर्जराव्याख्याने सूत्रेणैकेन चतुर्थस्थलं गतम् ॥

अथ मोक्षतत्त्वमावेदयति,—

सव्वस्स कम्मणो जो खयहेदू अप्पणो हु परिणामो ।
णेयो स भावमुक्खो दव्वविमुक्खो य कम्मपुहभावो ॥ ३७ ॥

व्याख्या। यद्यपि सामान्येन निरवशेषनिराकृतकर्ममलकलङ्कस्याशरीरस्यात्मन आत्य-

---

कथन करता है कि जो सम्यग्दृष्टी हैं उनके वीतराग विशेषण किस लिये लगाया गया है ? क्योंकि राग आदिक हेय (त्याज्य) हैं, ये मेरे नहीं हैं, ऐसा भेदविज्ञान उत्पन्न होनेपर वह रागका अनुभव करे तो भी उसके ज्ञानमात्रसे ही मोक्ष हो जाता है। इस शंकाका खंडन यह है कि, अन्धकारमें दो पुरुष हैं, एक हाथमें दीपक लिये हुए है और दूसरा विना दीपकके है। वह दीपकरहित पुरुष न तो कूपके पतनको जानता है और न सर्प आदिको जानता है, इसलिये वह अन्धकारमें कुये आदिमें अज्ञानसे गिर जावे तो दोष नहीं है। तथा जिसके हाथमें दीपक है वह मनुष्य यदि कूपपतन आदिसे नष्ट हो जावे तो उसके हाथमें जो दीपक था उसका कोई फल नहीं हुआ। और जो उस अन्धकारमें दीपकके प्रकाशसे कूपपतन आदिको छोड़ता है उसके दीपकका फल है। इसी दृष्टान्तके अनुसार कोई मनुष्य तो "राग आदि हेय हैं, मेरे नहीं हैं" इस प्रकारके भेदविज्ञानको नहीं जानता है वह तो कर्मोंसे बँधता ही है। और दूसरा मनुष्य भेदविज्ञानके उत्पन्न होनेपर भी जितने अंशोंसे रागादिकका अनुभव करता है उतने अंशोंसे वह भेदविज्ञानी पुरुष भी बँधता ही है। और उसके रागादि भेदविज्ञानका फल भी नहीं है। और जो जीव राग आदिकमें भेदविज्ञान होनेपर राग आदिका त्याग करता है उसके भेदविज्ञानका फल है यह जानना चाहिये। सोही कहा है—"नेत्रोंसे देखनेका फल सर्प आदिके दोषोंसे मार्गमें वचना ही है। और जो नेत्रद्वारा सर्प आदिको देखकर भी सर्पके विलमें पैर धरता है उसके नेत्रोंका होना व्यर्थ (निष्फल) है ॥ ३६ ॥ इस प्रकार निर्जरा तत्त्व के व्याख्यानसे एक सूत्रमें चतुर्थ स्थल समाप्त हुआ ॥

अव मोक्षतत्त्वका उपदेश करते हैं,—

**गाथाभावार्थः**—सब कर्मोंके नाशका कारण जो आत्माका परिणाम है उसको भाव मोक्ष जानना चाहिये। और कर्मोंकी जो आत्मासे सर्वथा भिन्नता है वह द्रव्यमोक्ष है। ३७

**व्याख्यार्थः**—"यद्यपि सामान्यरूपसे संपूर्णतया कर्मरूप मल-कलंकसे रहित जो

रागादिविकल्पोपाधिरहितपरमस्वास्थ्यसंवित्तिसञ्जातसदानन्दैकलक्षणसुखामृतरसास्वादं प्रति प्रीतिकरणमेवेति सप्तमाङ्गं व्याख्यातम् ॥

अथाष्टमाङ्गं नाम प्रभावनागुणं कथयति । श्रावकेन दानपूजादिना तपोधनेन च तपःश्रुतादिना जैनशासनप्रभावना कर्त्तव्येति व्यवहारेण प्रभावनागुणो ज्ञातव्यः । तत्रः पुनरुत्तरमथुरायां जिनसमयप्रभावनशीलाया उर्विल्लामहादेव्याः प्रभावननिमित्तमुपसर्गे जाते सति वज्रकुमारनाम्ना विद्याधरश्रमणेनाकाशे जैनरथभ्रमणेन प्रभावना कृतेत्येका आगमप्रसिद्धा कथा । द्वितीया तु जिनसमयप्रभावनाशीलवप्रामहादेवीनामस्वकीयजनन्या निमित्तं स्वस्य धर्मानुरागेण च हरिषेणनामदशमचक्रवर्तिना तद्भवमोक्षगामिना जिनसमयप्रभावनार्थमुत्तुङ्गतोरणजिनचैत्यालयमण्डितं सर्वभूमितलं कृतमिति रामायणे प्रसिद्धेयं कथा । निश्चयेन पुनस्तस्यैव व्यवहारप्रभावनागुणस्य बलेन मिथ्यात्वविषयकषायप्रभृतिसमस्तविभावपरिणामरूपपरसमयानां प्रभावं हत्वा शुद्धोपयोगलक्षणस्वसंवेदनज्ञानेन विशुद्धज्ञानदर्शनस्वभावनिजशुद्धात्मनः प्रकाशनमनुभवनमेव प्रभावनेति ॥ ८ ॥

एवमुक्तप्रकारेण मूढत्रयमदाष्टकषडनायतनशङ्काद्यष्टमलरहितं शुद्धजीवादितत्त्वार्थश्र-

---

प्रीतिको छोड़कर राग आदि विकल्पोंकी उपाधिरहित परमस्वास्थ्यके ज्ञानसे उत्पन्न सदा आनंद रूप जो सुखमय अमृतका आस्वाद है उसके प्रति प्रीतिका करना ही निश्चय वात्सल्य है। इस प्रकार सप्तम वात्सल्यअङ्गका व्याख्यान पूर्ण किया ।

अब अष्टम अङ्ग अर्थात् प्रभावनागुणका कथन करते हैं । आश्रव तो दान, पूजा आदिसे जो जैन मतकी प्रभावना करै और मुनि तप, श्रुत आदिसे जैनधर्मकी जो प्रभावना करै वही व्यवहारसे प्रभावना गुण है ऐसा जानना चाहिये । और इस गुणके पालनेमें उत्तरमथुरामें ( मथुरामें ) जिनमतकी प्रभावना करनेका है स्वभाव जिसका ऐसी उरविला महादेवीको प्रभावनाके निमित्त जब उपसर्ग हुआ तब वज्रकुमार नामक विद्याधर श्रमणने आकाशमें जैनरथको फिराकर प्रभावना की, यह तो एक शास्त्रमें प्रसिद्ध कथा है। और दूसरी कथा यह है कि उसी भवमें मोक्ष जानेवाले हरिषेण नामक दशवें चक्रवर्त्तीने जिनमतकी प्रभावना करनेका है स्वभाव जिसका ऐसी अपनी माता वप्रा महादेवीके निमित्त और अपने धर्मानुरागसे जिनमतकी प्रभावनाके लिये ऊंचे तोरणोंके धारक जिनमंदिर आदिसे समस्त पृथ्वीतलको भूषित करदिया । इस प्रकार यह कथा रामायण ( पद्मपुराण ) में प्रसिद्ध है। और निश्चयसे इसी व्यवहारप्रभावनागुणके बलसे मिथ्यात्व, विषय, कषाय आदि जो सम्पूर्ण विभाव परिणाम हैं उन रूप जो परमतोंका प्रभाव है उसको नष्ट करके शुद्धोपयोग लक्षण स्वसंवेदन ज्ञानसे निर्मल ज्ञान, दर्शन रूप स्वभावके धारक निज शुद्ध आत्माका जो प्रकाशन अर्थात् अनुभवन करना है सो प्रभावना है ॥ ८ ॥

ऐसे इस पूर्वोक्त प्रकारसे तीन मूढता, आठ मद, छः अनायतन और शंका आदि आठ

द्धानलक्षणं सरागसम्यक्त्वाभिधानं व्यवहारसम्यक्त्वं विज्ञेयम् । तथैव तेनैव व्यवहारसम्यक्त्वेन पारम्पर्येण साध्यं शुद्धोपयोगलक्षणनिश्चयरत्नत्रयभावनोत्पन्नपरमाह्लादैकरूपसुखामृतरसास्वादनमेवोपादेयमिन्द्रियसुखादिकं च हेयमिति रुचिरूपं वीतरागचारित्राविनाभूतं वीतरागसम्यक्त्वाभिधानं निश्चयसम्यक्त्वं च ज्ञातव्यमिति । अत्र व्यवहारसम्यक्त्वमध्ये निश्चयसम्यक्त्वं किमर्थं व्याख्यातमिति चेद् व्यवहारसम्यक्त्वेन निश्चयसम्यक्त्वं साध्यत इति साध्यसाधकभावज्ञापनार्थमिति ॥

इदानीं येषां जीवानां सम्यग्दर्शनग्रहणात्पूर्वमायुर्बन्धो नास्ति तेषां व्रताभावेऽपि नरनारकादिकुत्सितस्थानेषु जन्म न भवतीति कथयति । "सम्यग्दर्शनशुद्धा नारकतिर्यङ्नपुंसकस्त्रीत्वानि । दुष्कुलविकृताल्पायुर्दरिद्रतां च व्रजन्ति नाव्रतिकाः । १ ।" इतः परं मनुष्यगतिसमुत्पन्नसम्यग्दृष्टेः प्रभावं कथयति । "ओजस्तेजोविद्यावीर्ययशोवृद्धिविजयविभवसनाथाः । उत्तमकुला महार्था मानवतिलका भवन्ति दर्शनपूताः । १ ।" अथ

---

दोष रूप जो पच्चीस मल हैं उनसे रहित तथा शुद्ध जीव आदि तत्त्वार्थोंके श्रद्धानरूप लक्षणका धारक, सरागसम्यक्त्व है दूसरा नाम जिसका ऐसा व्यवहार सम्यक्त्व जानना चाहिये । और इसी प्रकार उसी व्यवहार सम्यक्त्वद्वारा परंपरासे साधने योग्य, शुद्ध उपयोगरूप निश्चय रत्नत्रयकी भावनासे उत्पन्न जो परम आह्लादरूप सुखामृतरसका आस्वादन है वही उपादेय है और इन्द्रियजन्य सुख आदिक हेय है ऐसी रुचिरूप तथा वीतराग चारित्रके बिना नहीं उत्पन्न होनेवाला ऐसा वीतरागसम्यक्त्व नामका धारक निश्चयसम्यक्त्व जानना चाहिये । यहां इस व्यवहार सम्यक्त्वके व्याख्यानमें निश्चय सम्यक्त्वका वर्णन क्यों किया ? ऐसा प्रश्न करो तो उत्तर यह है कि व्यवहारसम्यक्त्वसे निश्चयसम्यक्त्व साधा ( सिद्ध किया ) जाता है, इस साध्यसाधकभावको अर्थात् व्यवहारसम्यक्त्व साधक और निश्चयसम्यक्त्व साध्य है इस वार्त्ताको विदित करनेके लिये किया गया है ।

अब जिन जीवोंके सम्यग्दर्शनका ग्रहण होनेके पहले आयुका बन्ध नहीं हुआ है वे व्रतका अभाव होनेपर भी अर्थात् व्रत न करनेपर भी नर नारक आदि निंदनीय स्थानोंमें जन्म नहीं लेते ऐसा कथन करते हैं । "जिनके शुद्ध सम्यग्दर्शन होगया है ऐसे जीव नरक गति और तिर्यंच गतिमें नहीं उपजते हैं और नपुंसक, स्त्री, नीचकुल, अङ्गहीन शरीर, अल्प आयु और दरिद्रीपनको प्राप्त नहीं होते हैं ॥ १ ॥" अब इसके आगे मनुष्य गतिमें जो सम्यग्दृष्टि उत्पन्न होता है उसके प्रभावका वर्णन करते हैं । "जो दर्शनसे शुद्ध हैं ऐसे जीव दीप्ति, प्रताप, विद्या, वीर्य, यशवृद्धि, विजय और विभवसे सहित होते हैं और उत्तम कुलवाले, तथा विपुल ( बहुत ) धनके स्वामी होते हैं तथा इन पूर्वोक्त गुणोंसे वे सब मनुष्योंमें श्रेष्ठ होते हैं ॥ १ ॥" अब जो

देवगतौ पुनः प्रकीर्णकदेववाहनदेवकिल्बिषदेवनीचदेवत्रयं विहायान्येषु महर्द्धिकदेवेषू-त्पद्यते सम्यग्दृष्टिः। इदानीं सम्यक्त्वग्रहणात्पूर्वं देवायुष्कं विहाय ये बद्धायुष्कास्तान् प्रति सम्यक्त्वमाहात्म्यं कथयति। "हेट्ठिमछप्पुढवीणं जोइसवणभवणसव्वइच्छीणं। पुण्णिदरे ण हि सम्मो ण सासणो णारयापुण्णे। १।" तमेवार्थं प्रकारान्तरेण कथयति "ज्योतिर्भावनभौमेषु षट्स्वधः श्वभ्रभूमिषु। तिर्यक्षु नृसुरस्त्रीषु सद्दृष्टिर्नैव जायते। १।" अथौपशमिकवेदकक्षायिकाभिधानसम्यक्त्वत्रयमध्ये कस्यां गतौ कस्य सम्यक्त्वस्य सम्भ-वोऽस्तीति कथयति-"सौधर्मादिष्वसंख्याव्दायुष्कतिर्यक्षु नृष्वपि। रत्नप्रभावनौ च स्यात्स-म्यक्त्वत्रयमङ्गिनाम्। १।" कर्मभूमिजपुरुषे च त्रयं सम्भवति बद्धायुष्के लब्धायुष्केऽपि। किन्त्वौपशमिकमपर्याप्तावस्थायां महर्द्धिकदेवेष्वेव। "शेषेषु देवतिर्यक्षु षट्स्वधः श्वभ्रभू-मिषु। द्वौ वेदकोपशमकौ स्यातां पर्याप्तदेहिनाम्। १।" इति निश्चयव्यवहाररत्नत्रयात्म-कमोक्षमार्गावयविनः प्रथमावयवभूतस्य सम्यक्त्वस्य व्याख्यानेन गाथा गता॥ ४१॥

---

सम्यग्दृष्टि देवगतिमें उत्पन्न होवे तो प्रकीर्णक देव, वाहन देव, किल्बिष देव, व्यन्तर देव, भवनवासी देव और ज्योतिषी देवोंके पर्यायको छोड़कर अन्य जो महाऋद्धिके धारक देव हैं उनमें उत्पन्न होते हैं। अब जिन्होंने सम्यक्त्वका ग्रहण करनेके पहले ही देव आयुको छोड़कर अन्य किसी आयुका बन्ध कर लिया है उनके प्रति सम्यक्त्वका माहात्म्य कहते हैं। "प्रथम नरकको छोड़कर अन्य ६ नरकोंमें, ज्योतिषी, व्यन्तर और भवनवासी देवोंमें, सब स्त्रीलिङ्गोंमें, और तिर्यंचोंमें, सम्यग्दृष्टि उत्पन्न नहीं होता॥ १॥" अब इसी आशयको अन्य प्रकारसे कहते हैं कि "ज्योतिषी, भवनवासी और व्यन्तर देवोंमें, नीचेके ६ नरकोंकी पृथिवियोंमें, तिर्यंयोंमें और मनुष्यस्त्रियोंके तथा देवस्त्रि-योंके विषे सम्यग्दृष्टि उत्पन्न नहीं होता है। अब औपशमिक, वेदक और क्षायिक नामा जो तीन सम्यक्त्व हैं इनमेंसे किस गतिमें कौनसे सम्यक्त्वकी उत्पत्ति हो सकती है? सो कहते हैं। "सौधर्म आदि स्वर्गोंमें असंख्यात वर्षकी आयुके धारक तिर्यंच और मनुष्योंमें अर्थात् भोगभूमिके मनुष्य और तिर्यंचोंमें तथा रत्नप्रभा नामक प्रथम नरक पृथ्वीमें जीवोंके उपशम, वेदक और क्षायिक ये तीनों सम्यक्त्व होते हैं॥ १॥" और जिसने आयुको बांधलिया है अथवा प्राप्त करलिया है ऐसे कर्मभूमिके मनुष्यमें तीनोंही सम्यक्त्व होते हैं। परन्तु विशेष यह है कि अपर्याप्त अवस्थामें औपशमिक सम्यक्त्व महर्द्धिक देवोंमें ही होता है और "जो शेष (बचे हुए) देव तिर्यंच हैं उनमें ६ नीचेकी नरकभूमियोंमें पर्याप्तजीवोंके वेदक और उपशम ये दो सम्यक्त्व होते हैं॥ १॥" इस प्रकार निश्चय तथा व्यवहाररूप जो रत्नत्रय स्वरूप अवयवी है उसका प्रथम अवयवभूत जो सम्यग्दर्शन है उसके व्याख्यानसे गाथा समाप्त हुई॥ ४१॥

अथ रत्नत्रयात्मकमोक्षमार्गद्वितीयावयवरूपस्य सम्यग्ज्ञानस्य स्वरूपं प्रतिपादयति;—

संसयविमोहविब्भमविवज्जियं अप्पपरसरूवस्स ।
गहणं सम्मण्णाणं सायारमणेयभेयं तु ॥ ४२ ॥

व्याख्या। संसयविमोहविब्भमविवज्जियं" संशयः शुद्धात्मतत्त्वादिप्रतिपादकमागमज्ञानं किं वीतरागसर्वज्ञप्रणीतं भविष्यति परसमयप्रणीतं वेति ? संशयः। तत्र दृष्टान्तः—स्थाणुर्वा पुरुषो वेति। विमोहः परस्परसापेक्षनयद्वयेन द्रव्यगुणपर्यायादिपरिज्ञानाभावो विमोहः। तत्र दृष्टान्तः—गच्छत्तृणस्पर्शवद्दिग्मोहवद्वा। विभ्रमोऽनेकान्तात्मकवस्तुनो नित्यक्षणिकैकान्तादिरूपेण ग्रहणं विभ्रमः। तत्र दृष्टान्तः—शुक्तिकायां रजतविज्ञानवत्। इत्युक्तलक्षणसंशयविमोहविभ्रमैर्वर्जितं "अप्पपरसरूवस्स गहणं" सहजशुद्धकेवलज्ञानदर्शनस्वभावस्वात्मरूपस्य ग्रहणं परिच्छेदनं परिच्छित्तिस्तथा परद्रव्यस्य च भावकर्मद्रव्यकर्मनोकर्मरूपस्य जीवसम्बन्धिनस्तथैव पुद्गलादिपञ्चद्रव्यरूपस्य परकीयजीवरूपस्य च परिच्छेदनं यत्तत् "सम्मण्णाणं" सम्यग्ज्ञानं भवति। तच्च कथंभूतं, "सायारं" घटोऽयं

---

अब रत्नत्रयरूप जो मोक्षमार्ग है उसके द्वितीय अवयवरूप सम्यग्ज्ञानके स्वरूपका कथन करते हैं;—

गाथाभावार्थः—आत्मस्वरूप और परपदार्थके स्वरूपका जो संशय, विमोह ( अनध्यवसाय ) और विभ्रम ( विपर्यय ) रूप कुज्ञानसे रहित जानना है वह सम्यग्ज्ञान कहलाता है। यह आकार ( विकल्प ) सहित है और अनेक भेदोंका धारक है।

व्याख्यार्थः—"संसयविमोहविब्भमविवज्जियं" शुद्ध आत्मतत्त्व आदिका प्रतिपादन करनेवाला जो शास्त्रका ज्ञान है वह क्या वीतराग सर्वज्ञ द्वारा कहा हुआ सत्य है ? अथवा अन्यमतियों द्वारा निरूपण किया हुआ सत्य है ? इस प्रकार जो विचार करना है वह संशय है। इसमें दृष्टान्त ऐसा कि 'क्या यह अंधकारमें स्थित पदार्थ स्थाणु ( वृक्षका ठूंठ ) है अथवा कोई मनुष्य खड़ा हुआ है ?' इस प्रकार विचारना संशय है। गमन करते हुए पुरुषके जैसे चरणोंमें तृण ( घास ) आदिका स्पर्श होता है और उसको मालूम नहीं होता कि क्या लगा, वा जैसे दिशाका भूल जाना होता है उसी प्रकार एक दूसरेकी आपसमें अपेक्षाके धारक जो द्रव्यार्थिक पर्यायार्थिक स्वरूप दो नय हैं उनके अनुसार जो द्रव्य, गुण तथा पर्याय आदिका नहीं जानना है उसको विमोह कहते हैं। जैसे किसीको सीपमें चांदीका और चांदीमें सीपका ज्ञान होजाय। इसी प्रकार जो अनेकान्तरूप वस्तु है उसको यह नित्य ही है, यह अनित्य ही है ऐसे जो एकान्तरूप जानना है वह विभ्रम है। इन पूर्वोक्त लक्षणोंके धारक संशय, विमोह और विभ्रमसे रहित जो "अप्पपरसरूवस्स गहणं" सहजशुद्ध केवलज्ञान तथा केवल दर्शन स्वभावके धारक निज आत्माके स्वरूपका जो जानना और जीवके संबंधी ऐसे भावकर्म, द्रव्यकर्म, व जो कर्मस्वरूप पर

पटोऽयमित्यादिग्रहणव्यापाररूपेण साकारं सविकल्पं व्यवसायात्मकं निश्चयात्मकमित्यर्थः। पुनश्च किंविशिष्टं? "अणेयभेयं तु" अनेकभेदं तु पुनरिति ॥

तस्य भेदाः कथ्यन्ते। मतिश्रुतावधिमनःपर्ययकेवलज्ञानभेदेन पञ्चधा। अथवा श्रुतज्ञानाऽपेक्षया द्वादशाङ्गमङ्गमङ्गबाह्यं चेति द्विभेदम्। द्वादशाङ्गानां नामानि कथ्यन्ते। आचारं, सूत्रकृतं, स्थानं, समवायनामधेयं, व्याख्याप्रज्ञप्तिः, ज्ञातृकथा, उपासकाध्ययनं, अन्तकृतदशं, अनुत्तरोपपादिकदशं, प्रश्नव्याकरणं, विपाकसूत्रं, दृष्टिवादश्चेति। दृष्टिवादस्य च परिकर्मसूत्रप्रथमानुयोगपूर्वगतचूलिकाभेदेन पञ्च भेदाः कथ्यन्ते। तत्र चन्द्रसूर्यजम्बूद्वीपसागरव्याख्याप्रज्ञप्तिभेदेन परिकर्म पञ्चविधं भवति। सूत्रमेकभेदमेव। प्रथमानुयोगोऽप्येकभेदः। पूर्वगतं पुनरुत्पादपूर्वं, अग्रायणीयं, वीर्यानुप्रवादं, अस्तिनास्तिप्रवादं, ज्ञानप्रवादं, सत्यप्रवादं, आत्मप्रवादं, कर्मप्रवादं, प्रत्याख्यानं, विद्यानुवादं, कल्याणनामधेयं, प्राणानुवादं, क्रियाविशालं, लोकसंज्ञं, पूर्वं चेति चतुर्दशभेदम्। जलगतस्थलगताकाशगतहरमेखलादिमायास्वरूपशाकिन्यादिरूपपरावर्त्तनभेदेन चूलिका पञ्चविधा चेति संक्षेपेण द्वादशाङ्गव्याख्यानम्। अङ्गबाह्यं पुनः सामायिकं, चतुर्विंशतिस्तवं, बन्दना, प्रतिक्रमणं, वैनायिकं, कृतिकर्म, दशवैकालिकम्, उत्तराध्ययनं, कल्पव्यवहारः, कल्पाकल्पं, महाकल्पं, पुण्डरीकं, महापुण्डरीकं, अशीतिकं चेति चतुर्दशप्रकीर्णकसंज्ञं बोद्धव्यमिति।

---

द्रव्यका तथा पुद्गल आदि पांच द्रव्योंके स्वरूप और परजीवके स्वरूपका जो जानना है सो "सम्मण्णाणं" सम्यक् ज्ञान है। वह कैसा है कि "सायारं" साकार (विकल्पसहित) अर्थात् निश्चयरूप है। और फिर कैसा है कि "अणेयभेयं तु" अनेक भेदोंका धारक है।

अब उस सम्यक् ज्ञानके भेद कहे जाते हैं। मतिज्ञान, श्रुतज्ञान, अवधिज्ञान, मनःपर्ययज्ञान और केवलज्ञान इन भेदोंसे वह सम्यग्ज्ञान पांच प्रकारका है। अथवा श्रुतज्ञानकी अपेक्षाको लेकर ज्ञानके भेद करते हैं तो द्वादशाङ्गरूप अंग और अंगबाह्य इन भेदोंसे दो प्रकारका है। उनमें द्वादश अंगोंके नाम कहते हैं। आचाराङ्ग १, सूत्रकृताङ्ग २, स्थानाङ्ग ३, समवायांग ४, व्याख्याप्रज्ञप्त्यंग ५, ज्ञातृकथांग ६, उपासकाध्ययनांग ७, अन्तकृद्दशांग ८, अनुत्तरोपपादिकदशांग ९, प्रश्नव्याकरणांग १०, विपाकसूत्रांग ११, और दृष्टिवाद १२ ये द्वादश अंगोंके नाम हैं। अब दृष्टिवादनामक बारहवें अंगके परिकर्म १, सूत्र २, प्रथमानुयोग ३, पूर्वगत ४, तथा चूलिका ५ इन भेदोंसे जो पांच भेद हैं उनका वर्णन करते हैं। उनमें चन्द्रप्रज्ञप्ति, सूर्यप्रज्ञप्ति, जंबूद्वीपप्रज्ञप्ति, सागरप्रज्ञप्ति और व्याख्याप्रज्ञप्ति इन भेदोंसे प्रथम भेद जो परिकर्म है वह पांच प्रकारका है। सूत्र एक ही प्रकारका है। प्रथमानुयोग भी एक ही प्रकारका है। और जो चौथा पूर्वगत है वह उत्पादपूर्व १, अग्रायणीयपूर्व २, वीर्यानुप्रवादपूर्व ३, अस्तिनास्तिप्रवादपूर्व ४, ज्ञानप्रवादपूर्व ५, सत्यप्रवादपूर्व ६, आत्मप्रवादपूर्व ७, कर्मप्रवादपूर्व ८, प्रत्याख्यानपूर्व ९, विद्यानुवादपूर्व १०, कल्याणपूर्व ११, प्राणानुवादपूर्व १२, क्रियाविशालपूर्व १३ और लोकसारपूर्व १४ इन भेदोंसे चौदह प्रकारका है। जलगत

अथवा वृषभादिचतुर्विंशतितीर्थङ्करभरतादिद्वादशचक्रवर्त्तिविजयादिनवबलदेवत्रिपिष्टादिनववासुदेवसुग्रीवादिनवप्रतिवासुदेवसम्बन्धित्रिषष्टिपुरुषपुराणभेदभिन्नः प्रथमानुयोगो भण्यते। उपासकाध्ययनादौ श्रावकधर्मम्, आचाराराधनादौ यतिधर्मं च यत्र मुख्यत्वेन कथयति स चरणानुयोगो भण्यते। त्रिलोकसारे जिनान्तरलोकविभागादिग्रन्थव्याख्यानं करणानुयोगो विज्ञेयः। प्राभृततत्त्वार्थसिद्धान्तादौ यत्र शुद्धाशुद्धजीवादिषड्द्रव्यादीनां मुख्यवृत्त्या व्याख्यानं क्रियते स द्रव्यानुयोगो भण्यते। इत्युक्तलक्षणानुयोगचतुष्टयरूपेण चतुर्विधं श्रुतज्ञानं ज्ञातव्यम्। अनुयोगोऽधिकारः परिच्छेदः प्रकरणमित्याद्येकोऽर्थः। अथवा षड्द्रव्यपञ्चास्तिकायसप्ततत्त्वनवपदार्थेषु 'मध्ये' निश्चयनयेन स्वकीयशुद्धात्मद्रव्यं, स्वशुद्धजीवास्तिकायो, निजशुद्धात्मतत्त्वं, निजशुद्धात्मपदार्थ उपादेयः। शेषं च हेयमिति संक्षेपेण हेयोपादेयभेदेन द्विधा व्यवहारज्ञानमिति॥

---

चूलिका १, स्थलगत चूलिका २, आकाशगत चूलिका ३, हरमेखला आदि मायास्वरूप चूलिका ४ और शाकिन्यादिरूप परावर्त्तन चूलिका ५ इन भेदोंसे चूलिका पांच प्रकारकी है। इस प्रकार संक्षेपसे द्वादशांगका व्याख्यान है। और जो अङ्गबाह्य श्रुतज्ञान है वह सामायिक १, चतुर्विंशतिस्तव २, वंदना ३, प्रतिक्रमण ४, वैनयिक ५, कृतिकर्म ६, दशवैकालिक ७, अनुत्तराध्ययन ८, कल्पव्यवहार ९, कल्पाकल्प १०, महाकल्प ११, पुण्डरीक १२, महापुण्डरीक १३ और अशीतिक १४, इन प्रकीर्णकरूप भेदोंसे चौदह प्रकारका जानना चाहिये॥

अथवा वृषभ आदि चौवीस तीर्थङ्करोंका, भरत आदि बारह चक्रवर्तियोंका, विजय आदि नौ बलदेवोंका, त्रिपिष्ट आदि नौ नारायणोंका, और सुग्रीव आदि नौ प्रतिनारायणोंका संबंध रखनेवाले जो तिरेसठ ६३ शलाकापुरुषोंके पुराण हैं उनरूप भेदोंका धारक जो है वह प्रथमानुयोग कहलाता है। उपासकाध्ययन आदिमें श्रावकका धर्म, और मूलाचार भगवती-आराधना आदि ग्रंथोंमें मुनिका धर्म जहां मुख्यतासे कहागया है वह दूसरा चरणानुयोग कहा जाता है। त्रिलोकसार, जिनान्तर और लोकविभाग आदि ग्रंथोंका व्याख्यान जिसमें हो उसको करणानुयोग जानना चाहिये। समयसार आदि प्राभृत ( पाहुड़ ) और तत्त्वार्थसूत्र, तथा सिद्धान्तआदि शास्त्रोंमें मुख्यतासे शुद्ध-अशुद्ध जीव आदि छः द्रव्य आदिका जो वर्णन किया गया है वह द्रव्यानुयोग कहलाता है। इस प्रकार उक्त लक्षणके धारक जो चार अनुयोग हैं उनरूप चार प्रकारका श्रुतज्ञान जानने योग्य है। अनुयोग, अधिकार, परिच्छेद और प्रकरण इत्यादि शब्दोंका अर्थ एक ही है। अथवा षट् द्रव्य, पांच अस्तिकाय, सात तत्त्व और नौ पदार्थ जो हैं उनमें निश्चयनयसे अपना शुद्ध आत्मद्रव्य, अपना शुद्ध जीव अस्तिकाय, निज शुद्ध आत्मतत्त्व तथा निज शुद्ध जो आत्मपदार्थ है वह तो केवल उपादेय है। और इसके सिवाय परके शुद्ध अशुद्ध जीवादि सभी हेय हैं। इस प्रकार संक्षेपसे हेय तथा उपादेय के भेदोंसे व्यवहारज्ञान दो प्रकार का है॥

इदानीं तेनैव विकल्परूपव्यवहारज्ञानेन साध्यं निश्चयज्ञानं कथ्यते । तथाहि—रागात् परकलत्रादिवाञ्छारूपं, द्वेषात् परवधबन्धच्छेदादिवाञ्छारूपं च मदीयापध्यानं कोऽपि न जानातीति मत्वा स्वशुद्धात्मभावनासमुत्पन्नसदानन्दैकलक्षणसुखामृतरसनिर्मलजलेन चित्तशुद्धिमकुर्वाणः सन्नयं जीवो बहिरङ्गबकवेषेण यल्लोकरञ्जनां करोति तन्मायाशल्यं भण्यते । निजनिरञ्जननिर्दोषपरमात्मैवोपादेय इति रुचिरूपसम्यक्त्वाद्विलक्षणं मिथ्याशल्यं भण्यते । निर्विकारपरमचैतन्यभावनोत्पन्नपरमाह्लादैकरूपसुखामृतरसास्वादमलभमानोऽयं जीवो दृष्टश्रुतानुभूतभोगेषु यन्नियतं निरन्तरं चित्तं ददाति तन्निदानशल्यमभिधीयते । इत्युक्तलक्षणशल्यत्रयविभावपरिणामप्रभृतिसमस्तशुभाशुभसङ्कल्पविकल्परहितेन परमस्वास्थ्यसंवित्तिसमुत्पन्नतात्त्विकपरमानन्दैकलक्षणसुखामृततृप्तेन स्वेनात्मना स्वस्य सम्यग्निर्विकल्परूपेण वेदनं परिज्ञानमनुभवनमिति निर्विकल्पस्वसंवेदनज्ञानमेव निश्चयज्ञानं भण्यते ॥

अत्राह शिष्यः । इत्युक्तप्रकारेण प्राभृतग्रन्थे यन्निर्विकल्पस्वसंवेदनज्ञानं भण्यते, तन्न

---

अब जो विकल्परूप व्यवहारज्ञान है उसीसे साध्य ( सिद्ध होने योग्य ) जो निश्चयज्ञान है उसका कथन करते हैं। जैसे-रागके उदयसे परस्त्री आदिमें वांछारूप, और द्वेषसे अन्य जीवोंके मारने, बांधने अथवा छेदने रूप जो मेरा दुर्ध्यान ( बुरा परिणाम ) है उसको कोई भी नहीं जानता है ऐसा मानकर निज शुद्ध आत्माकी भावनासे उत्पन्न, निरन्तर आनंदरूप एक लक्षणका धारक जो सुखरूपी अमृतरस वही हुआ जो निर्मल जल उस निर्मल जलसे अपने चित्तकी शुद्धिको नहीं करता हुआ यह जीव बाहरमें बगुले जैसे वेषको धारणकर जो लोकोंको प्रसन्न करता है वह मायाशल्य कहलाता है। और अपना निरञ्जन दोषरहित जो परमात्मा है वही उपादेय है इस प्रकारकी रुचिरूप जो सम्यक्त्व है उससे विपरीत लक्षणका धारक जो है उसको मिथ्याशल्य कहते हैं। और विकाररहित-परम चैतन्यकी भावनासे उत्पन्न-परम आनंदस्वरूप-सुखामृतके रसके स्वादको नहीं प्राप्त हुआ यह जीव जो देखे हुए, सुने हुये तथा अनुभवमें लाये हुए भोगोंमें निरन्तर चित्तको देता है वह निदान शल्य कहलाता है। इस प्रकार उक्त लक्षणके धारक जो माया, मिथ्या और निदानरूप तीन शल्यस्वरूप विभाव परिणाम हैं इनको आदि लेकर जो संपूर्ण शुभ तथा अशुभरूप संकल्प विकल्प हैं उनसे रहित और परम निजस्वभावके जाननेसे उत्पन्न जो यथार्थ परमानन्दरूप एक लक्षणस्वरूप सुखामृत उसके रसके आस्वादनसे तृप्त हुआ ऐसा जो अपना आत्मा है उसके द्वारा जो ( स्व ) निजस्वरूपका ( सं ) भलेप्रकार अर्थात् निर्विकल्परूपसे 'वेदन' जानना अर्थात् अनुभवमें करना है वही निर्विकल्पस्वसंवेदनज्ञान-निश्चयज्ञान कहा जाता है ॥

यहांपर शिष्य कहता है कि इस कहे हुए प्रकारसे प्राभृत ( पाहुड ) शास्त्रमें जो विक-

घटते। कस्मादितिचेत् तदुच्यते। सत्तावलोकरूपं चक्षुरादिदर्शनं यथा जैनमते निर्विकल्पं कथ्यते, तथा बौद्धमते ज्ञानं निर्विकल्पकं भण्यते। परं किन्तु तन्निर्विकल्पमपि विकल्पजनकं भवति। जैनमते तु विकल्पस्योत्पादकं भवत्येव न। किन्तु स्वरूपेणैव सविकल्पमिति। तथैव स्वपरप्रकाशकं चेति। तत्र परिहारः। कथंचित् सविकल्पकं निर्विकल्पकं च। तथाहि—यथा विषयानन्दरूपं स्वसम्वेदनं रागसम्वित्तिविकल्परूपेण सविकल्पमपि शेषानीहितसूक्ष्मविकल्पानां सद्भावेऽपि सति तेषां मुख्यत्वं नास्ति तेन कारणेन निर्विकल्पमपि भण्यते। तथा स्वशुद्धात्मसम्वित्तिरूपं वीतरागस्वसम्वेदनज्ञानमपि स्वसंवित्त्याकारैकविकल्पेन सविकल्पमपि बहिर्विषयानीहितसूक्ष्मविकल्पानां सद्भावेऽपि सति तेषां मुख्यत्वं नास्ति तेन कारणेन निर्विकल्पमपि भण्यते। यत एवेहापूर्वस्वसंवित्त्याकारान्तर्मुखप्रतिभासेऽपि बहिर्विषयानीहितसूक्ष्माविकल्पा अपि सन्ति तत एव कारणात् स्वपरप्रकाशकं च सिद्धम्। इदं तु सविकल्पकनिर्विकल्पकस्य तथैव स्वपरप्रकाशकस्य ज्ञानस्य च व्याख्यानं यद्यागमाध्यात्मतर्कशास्त्रानुसारेण विशेषेण व्याख्यायते तदा महान् विस्तारो भवति। स चाध्यात्मशास्त्रत्वान्न कृत इति।

---

ल्परहित स्वसंवेदन ज्ञान कहा गया है वह घटित नहीं होता। क्यों नहीं घटित होता ऐसा पूछो तो इसका उत्तर कहते हैं—जैनमतमें जैसे सत्तावलोकरूप अर्थात् सत्तामात्रको देखनेरूप जो चक्षुर्दर्शन आदि है उसको निर्विकल्प कहते हैं, उसी प्रकार बौद्धमतमें ज्ञानको निर्विकल्पक कहते हैं। परन्तु विशेष यह है कि—यद्यपि बौद्धमतमें ज्ञान निर्विकल्प है, तथापि विकल्पको उपन्न करनेवाला होता है। और जैनमतमें तो ज्ञान विकल्पको उत्पन्न करनेवाला है ही नहीं, किन्तु स्वरूप (स्वभाव) से ही विकल्पसहित है। और इसी प्रकार निजका तथा परका प्रकाश करनेवाला है। अब इस शंकाको दूर करनेके लिये कहते हैं कि-जैनमतमें ज्ञानको कथंचित् सविकल्प और कथंचित् निर्विकल्प माना गया है, सो ही दिखाते हैं कि- जैसे विषयोंमें आनन्दरूप जो स्वसंवेदन है वह रागके जाननेरूप विकल्परूप होनेसे सविकल्प है; तो भी बाकीके नहीं चाहे हुए जो जो सूक्ष्म विकल्प हैं उनका सद्भाव होनेपर भी उन विकल्पोंकी मुख्यता नहीं है, इस कारणसे उस ज्ञानको निर्विकल्प भी कहते हैं। इसी प्रकार निज शुद्ध आत्माके जाननेरूप जो वीतराग स्वसंवेदन ज्ञान है वह निजसंवित्तिके आकाररूप एक विकल्पके होनेसे यद्यपि सविकल्प है, तथापि बाह्य विषयोंके नहीं चाहे हुए विकल्पोंका उस ज्ञानमें सद्भाव होनेपर भी उनको उस ज्ञानमें मुख्यता नहीं है। इस कारणसे उस ज्ञानको निर्विकल्प भी कहते हैं। और जिस ही कारणसे यहां अपूर्व स्वसंवित्तिके आकाररूप अन्तरंग मुख्य प्रतिभासके होनेपरभी बाह्य विषयवाले नहीं चाहे हुए सूक्ष्म विकल्प भी हैं, उसही कारण से ज्ञान निज तथा परको प्रकाश करनेवाला भी सिद्ध हुआ। यदि इस सविकल्प निर्विकल्प तथा स्वपरप्रकाशक ज्ञानका व्याख्यान आगमशास्त्र, अध्यात्मशास्त्र और तर्कशास्त्रके अनुसार विशेषरूपसे

एवं रत्नत्रयात्मकमोक्षमार्गावयविनो द्वितीयावयवभूतस्य ज्ञानस्य व्याख्यानेन गाथा गता ॥ ४२ ॥

अथ निर्विकल्पसत्ताग्राहकं दर्शनं कथयति;—

जं सामण्णं गहणं भावाणं णेव कट्टुमायारं ।
अविसेसिदूण अट्ठे दंसणमिदि भण्णए समए ॥४३॥

व्याख्या। "जं सामण्णं गहणं भावाणं" यत् सामान्येन सत्तावलोकनेन ग्रहणं परिच्छेदनं भावानां पदार्थानां, किं कृत्वा "णेव कट्टुमायारं" नैव कृत्वा। कं? आकारं विकल्पं; तदपि किं कृत्वा? "अविसेसिदूण अट्ठे" अविशेष्याविभेद्यार्थान्। केन रूपेण? शुक्लोऽयं, कृष्णोऽयं, दीर्घोऽयं, ह्रस्वोऽयं, घटोऽयं, पटोऽयमित्यादि "दंसणमिदि भण्णए समए" तत्सत्तावलोकं दर्शनमिति भण्यते समये परमागमे। नेदमेव तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनं वक्तव्यम्। कस्मादितिचेत्-तत्र श्रद्धानं विकल्परूपमिदं तु निर्विकल्पं यतः। अयमत्र भावः-यदा कोऽपि किमप्यवलोकयति पश्यति, तदा यावत् विकल्पं न करोति तावत् सत्तामात्रग्रहणं दर्शनं भण्यते। पश्चाच्छुक्लादिविकल्पे जाते ज्ञानमिति ॥ ४३ ॥

---

किया जावे तो बड़ा विस्तार होता है, और यह द्रव्यसंग्रह अध्यात्मशास्त्र है, इस कारण उस ज्ञानका विषेष वर्णन यहां नहीं किया गया है।

इस प्रकार रत्नत्रयस्वरूप जो मोक्षमार्गरूप अवयवी है उसके दूसरे अवयवरूप ज्ञानके व्याख्यानद्वारा गाथा समाप्त हुई ॥ ४२ ॥

अब विकल्परहित होकर सत्ताको ग्रहण करनेवाला जो दर्शन उसका कथन करते हैं—

गाथाभावार्थः—यह शुक्ल है, यह कृष्ण है इत्यादि रूपसे पदार्थोंको भिन्न भिन्न न करके और विकल्पको न करके जो पदार्थोंका सामान्यसे अर्थात् सत्तावलोकनरूपसे ग्रहण करना है उसको परमागममें दर्शन कहा गया है ॥ ४३ ॥

व्याख्यार्थ—"जं सामण्णं गहणं भावाणं" जो सामान्यसे अर्थात् सत्तावलोकन (यह है, इस प्रकार पदार्थकी विद्यमानता देखनेरूप) से पदार्थोंका जानना है। क्या करके? "णेव कट्टुमायारं" विकल्पको न करके। वह भी क्या करके? अविसेसिदूण-अट्ठे" अर्थोंको विशेषित अर्थात् यह शुक्ल है, यह कृष्ण है, यह दीर्घ (बड़ा) है, यह छोटा है, यह घट है और यह पट है, इत्यादि रूपसे भिन्न भिन्न न करके "दंसणमिदि भण्णए समए" वह परमागममें सत्तावलोकनरूप दर्शन कहा जाता है। इसी दर्शनको 'तत्त्वार्थका जो श्रद्धान है वह सम्यग्दर्शन है' इस सूत्रमें जो तत्त्वार्थश्रद्धानरूप सम्यग्दर्शन कहा गया है सो न कहना चाहिये। क्यों नहीं कहना चाहिये? यह प्रश्न करो तो उत्तर यह है कि, श्रद्धान जो है वह तो विकल्परूप है और यह विकल्परहित है। भावार्थ-यहांपर यह है कि, जब कोई भी किसी पदार्थको देखता है तब जबतक वह देख-

अथ छद्मस्थानां ज्ञानं सत्तावलोकनदर्शनपूर्वकं भवति, मुक्तात्मनां युगपदिति प्रतिपादयति;—

दंसणपुव्वं णाणं छदमत्थाणं ण दोण्णि उवउग्गा ।
जुगवं जह्मा केवलिणाहे जुगवं तु ते दोवि ॥४४॥

व्याख्या। "दंसणपुव्वं णाणं छदमत्थाणं" सत्तावलोकनदर्शनपूर्वकं ज्ञानं भवति छद्मस्थानां संसारिणां। कस्मात्। "ण दोण्णि उवउग्गा जुगवं जह्मा" ज्ञानदर्शनोपयोगद्वयं युगपन्न भवति यस्मात्, "केवलिणाहे जुगवं तु ते दोऽवि" केवलिनाथे तु युगपत्तौ ज्ञानदर्शनोपयोगौ द्वौ भवत इति।

अथ विस्तरः। चक्षुरादीन्द्रियाणां स्वकीयस्वकीयक्षयोपशमानुसारेण तद्योग्यदेशस्थितस्वरूपादिविषयाणां ग्रहणमेव सन्निपातः सम्बन्धः सन्निकर्षो भण्यते। न च नैयायिकमतवच्चक्षुरादीन्द्रियाणां स्वरूपादिस्वकीयस्वकीयविषयपार्श्वे गमन इति सन्निकर्षो वक्तव्यः। स एव सम्बन्धो लक्षणं यस्य तल्लक्षणं यन्निर्विकल्पं सत्तावलोकनदर्शनं तत्पूर्वं शुक्लमिदमि-

---

नेवाला विकल्प न करै तवतक तो जो सत्तामात्रका ग्रहण है उसको दर्शन कहते हैं। और फिर जब यह शुक्ल है, यह कृष्ण है इत्यादि रूपसे विकल्प उत्पन्न होते हैं तब उसको ज्ञान कहते हैं ॥ ४३ ॥

अब जो छद्मस्थ हैं उनके जो ज्ञान होता है वह तो सत्तावलोकनरूप दर्शन पहले हो लेता है तब होता है, और जो मुक्तजीव अर्थात् केवलज्ञानी हैं उनके दर्शन और ज्ञान एक ही समयमें होते हैं, ऐसा प्रतिपादन करते हैं;—

**गाथार्थः**—छद्मस्थ जीवोंके दर्शनपूर्वक ज्ञान होता है। क्योंकि, छद्मस्थोंके ज्ञान और दर्शन ये दोनों उपयोग एक समयमें नहीं होते। तथा जो केवली भगवान् हैं उनके ज्ञान तथा दर्शन ये दोनों ही उपयोग एक समयमें होते हैं ॥ ४४ ॥

**व्याख्यार्थः**—"दंसणपुव्वं णाणं छदमत्थाणं" छद्मस्थ अर्थात् संसारी जीवोंके सत्तावलोकन-दर्शन पहले हो लेता है तब ज्ञान होता है। क्योंकि, "ण दोण्णि उवउग्गा जुवगं जह्मा" छद्मस्थोंके ज्ञानोपयोग और दर्शनोपयोग ये दोनों एक समयमें नहीं होते इसलिये। "केवलिणाहे जुगवं तु ते दोवि" और केवली भगवानमें वे दोनों ज्ञान, दर्शन उपयोग एकही समयमें होते हैं।

अब विस्तारसे वर्णन करते हैं-चक्षु आदि इन्द्रियोंके अपने अपने क्षयोपशमके अनुसार अपने योग्य देशमें विद्यमान जो निजरूप आदि विषय हैं उनका ग्रहण करना है उसीको सन्निपात, संबन्ध अथवा सन्निकर्ष कहते हैं। और नैयायिक मतके समान चक्षु आदि इन्द्रियोंका जो अपने अपने स्वरूप आदि विषयोंके पास जाना है, उसको सन्निकर्ष नहीं कहना चाहिये। भावार्थ—नेत्र आदि इन्द्रियोंद्वारा जो रूप आदिका ग्रहण किया

त्यायवग्रहादिविकल्परूपमिन्द्रियानिन्द्रियजनितं मतिज्ञानं भवति। इत्युक्तलक्षणमतिज्ञान-पूर्वकं तु धूमादग्निविज्ञानवदर्थादर्थान्तरग्रहणरूपं लिङ्गजं तथैव घटादिशब्दश्रवणरूपं शब्दजं चेति द्विविधं श्रुतज्ञानं भवति। अथावधिज्ञानं पुनरवधिदर्शनपूर्वकमिति। ईहा-मतिज्ञानपूर्वकं तु मनःपर्ययज्ञानं भवति।

अत्र श्रुतज्ञानमनःपर्ययज्ञानजनकं यदवग्रहेहादिरूपं मतिज्ञानं भणितम्, तदपि दर्शन-पूर्वकत्वादुपचारेण दर्शनं भण्यते, यतस्तेन कारणेन श्रुतज्ञानमनःपर्ययज्ञानद्वयमपि दर्श-नपूर्वकं ज्ञातव्यमिति। एवं छद्मस्थानां सावरणक्षयोपशमिकज्ञानसहितत्वात् दर्शनपूर्वकं ज्ञानं भवति। केवलिनां तु भगवतां निर्विकारस्वसम्वेदनसमुत्पन्ननिरावरणक्षायिकज्ञान-सहितत्वान्निर्मेघादित्ये युगपदातपप्रकाशवद्दर्शनं ज्ञानं च युगपदेवेति विज्ञेयम्। छद्मस्था

---

जाता है वही सन्निकर्ष है, और नैयायिकमतमें जो नेत्र आदि इन्द्रियोंका अपने रूप आदि विषयोंके पास गमन करने रूप सन्निकर्ष माना है वह नहीं। वह सम्बन्ध अथवा सन्निकर्ष ही है लक्षण जिसका, ऐसा जो निर्विकल्पक-सत्तावलोकन-दर्शन उसके होनेके पीछे "यह शुक्ल ( सफेद ) है", इत्यादि अवग्रह आदि विकल्पोंरूप-पांचों इन्द्रियों तथा अनिन्द्रिय-मनसे उत्पन्न मतिज्ञान होता है। और इस पूर्वोक्त लक्षणका धारक मतिज्ञान पहले हो लेता है तब धूम ( धुआं ) से जैसे अग्निका ज्ञान हो जाता है इसी प्रकार एक पदार्थसे दूसरे पदार्थको ग्रहण करनेरूप लिंगज ( चिन्हसे उत्पन्न हुआ ) तथा इसी प्रकार घट आदि शब्दोंके सुननेरूप शब्दज ( शब्दसे उत्पन्न हुआ ), ऐसे दो प्रकारका श्रुतज्ञान होता है। भावार्थ—श्रुतज्ञान दो प्रकारका है एक तो लिंगज और दूसरा शब्दज; उनमें एक पदार्थको जानकर उसके जरियेसे जो दूसरे पदार्थका जान लेना है वह तो लिंगज श्रुतज्ञान है और शब्दोंके सुननेसे जो ज्ञान होता है वह शब्दज श्रुतज्ञान है। और अवधिदर्शन पहले हो लेता है तब अवधिज्ञान होता है। और जो मनःपर्ययज्ञान है वह ईहानामक मतिज्ञानपूर्वक होता है।

यहांपर श्रुतज्ञानको उत्पन्न करनेवाला अवग्रह, और मनःपर्ययज्ञानको उत्पन्न करने-वाला ईहा, आदिरूप जो मतिज्ञान कहा है अर्थात् श्रुतज्ञानको उत्पन्न करनेवाला अवग्र-हरूप मतिज्ञान और मनःपर्ययज्ञानको उत्पन्न करनेवाला ईहारूप मतिज्ञान कहा गया है; वह मतिज्ञान भी दर्शन पहले हो लेता है तभी होता है। इस लिये मतिज्ञान भी उप-चारसे दर्शन कहलाता है। इस कारण श्रुतज्ञान और मनःपर्ययज्ञान इन दोनोंको भी दर्शनपूर्वक जानना चाहिये। इस पूर्वोक्त प्रकारसे छद्मस्थ जीव आवरणसहित क्षयोपश-मिक ज्ञानसहित हैं, इस कारण छद्मस्थोंके दर्शनपूर्वक ज्ञान होता है। और केवली भग-वान् विकाररहित और अपने संवेदन ( जानने )से उत्पन्न ऐसा जो क्षायिक ज्ञान है उससे सहित हैं, इसलिये केवली भगवानोंके जैसे बादलके आवरणरहित सूर्यके एक ही

इति कोऽर्थः ? छद्मशब्देन ज्ञानदर्शनावरणद्वयं भण्यते, तत्र तिष्ठन्तीति छद्मस्थाः। एवं तर्काभिप्रायेण सत्तावलोकनदर्शनं व्याख्यातम्।

अत ऊर्ध्वं सिद्धान्ताभिप्रायेण कथ्यते। तथाहि—उत्तरज्ञानोत्पत्तिनिमित्तं यत् प्रयत्नं तद्रूपं यत् स्वस्यात्मनः परिच्छेदनमवलोकनं तद्दर्शनं भण्यते। तदनन्तरं यद्बहिर्विषये विकल्परूपेण पदार्थग्रहणं तद्ज्ञानमिति वार्त्तिकम्। यथा कोऽपि पुरुषो घटविषयविकल्पं कुर्वन्नास्ते, पश्चात् पटपरिज्ञानार्थं चित्ते जाते सति घटविकल्पाद्व्यावर्त्त्य यत् स्वरूपे प्रयत्नमवलोकनं परिच्छेदनं करोति तद्दर्शनमिति। तदनन्तरं पटोऽयमिति निश्चयं यद्बहिर्विषयरूपेण पदार्थग्रहणविकल्पं करोति तद् ज्ञानं भण्यते।

अत्राह शिष्यः-यद्यात्मग्राहकं दर्शनं, परग्राहकं ज्ञानं भण्यते, तर्हि यथा नैयायिकमते ज्ञानमात्मानं न जानाति, तथा जैनमतेऽपि ज्ञानमात्मानं न जानातीति दूषणं प्राप्नोति। अत्र परिहारः। नैयायिकमते ज्ञानं पृथग्दर्शनं पृथगिति गुणद्वयं

---

समयमें आतप और प्रकाश होते हैं, उसी प्रकार दर्शन और ज्ञान ये दोनों एकही समयमें होते हैं ऐसा जानना चाहिये। प्रश्न— जो गाथामें 'छद्मस्थ' कहा गया है इसका क्या अर्थ है ? उत्तर—छद्म शब्दसे ज्ञानावरण तथा दर्शनावरण ये दोनों कहे जाते हैं, उस छद्ममें जो रहैं वे छद्मस्थ हैं। इस प्रकार तर्क (न्याय)के अभिप्रायसे सत्तावलोकन दर्शनका व्याख्यान किया गया।

अब इसके आगे सिद्धान्तके अभिप्रायसे कहते हैं। सो ही दिखाते हैं। आगेके कालमें होनेवाला जो ज्ञान है उसकी उत्पत्तिका निमित्त जो प्रयत्न उस स्वरूप जो निज आत्माका परिच्छेदन अर्थात् अवलोकन (देखना) वह दर्शन कहलाता है, और उसके पीछे जो बाह्य विषयमें विकल्परूपसे पदार्थका ग्रहण है वह ज्ञान है; यह वार्त्तिक है। जैसे कोई पुरुष पहले घटके विषयका विकल्प करता हुआ बैठा है, फिर उसी पुरुषका चित्त जब पटके जाननेके लिये होता है, तब वह पुरुष घटके विकल्पसे हटकर जो स्वरूपमें प्रयत्न अर्थात् अवलोकन (परिच्छेदन) करता है, उसको दर्शन कहते हैं। उसके अनंतर यह पट है, इस प्रकारसे निश्चयरूप जो बाह्य विषयरूपसे पदार्थके ग्रहणस्वरूप विकल्पको करता है वह विकल्प, ज्ञान कहलाता है।

यहांपर शिष्य कहता है कि हे गुरो ! यदि आप आत्मा (अपने)को ग्रहण करनेवाला जो है उसको दर्शन और जो पर पदार्थको ग्रहण करनेवाला है उसको ज्ञान कहते हैं तो नैयायिकोंके मतमें जैसे ज्ञान आत्माको नहीं जानता है, वैसेही जैनमतमें भी ज्ञान आत्माको नहीं जानता है, ऐसा दूषण प्राप्त होता है। अब इस शिष्यकी शंकाको आचार्य दूर करते हैं कि नैयायिकमतमें ज्ञान जुदा और दर्शन जुदा इस प्रकारसे दो गुण नहीं हैं अर्थात् ज्ञान और दर्शन ये दो जुदे जुदे गुण नहीं हैं। इस कारण उन नैयायिकोंके

नास्ति, तेन कारणेन तेषामात्मपरिज्ञानाभावदूषणं प्राप्नोति । जैनमते पुनर्ज्ञानगुणेन परद्रव्यं जानाति, दर्शनगुणेनात्मानं च जानातीत्यात्मपरिज्ञानाभावदूषणं न प्राप्नोति । कस्मादिति चेत्-यथैकोऽप्यग्निर्दहतीति दाहकः, पचतीति पाचको, विषयभेदेन द्विधा भिद्यते । तथैवाभेदनयेनैकमपि चैतन्यं भेदनयविवक्षायां यदात्मग्राहकत्वेन प्रवृत्तं तदा तस्य दर्शनमिति संज्ञा, पश्चात् यच्च परद्रव्यग्राहकत्वेन प्रवृत्तं तस्य ज्ञानसंज्ञेति विषयभेदेन द्विधा भिद्यते । किं च यदि सामान्यग्राहकं दर्शनं विशेषग्राहकं ज्ञानं भण्यते, तदा ज्ञानस्य प्रमाणत्वं न प्राप्नोति । कस्मादिति चेत्, वस्तुग्राहकं प्रमाणं । वस्तु च सामान्यविशेषात्मकं । ज्ञानेन पुनर्वस्त्वेकदेशो विशेष एव गृहीतो, न च वस्तु । सिद्धान्तेन पुनर्निश्चयेन गुणगुणिनोरभिन्नत्वात् संशयविमोहविभ्रमरहितवस्तुज्ञानस्वरूपात्मैव प्रमाणम् । स च प्रदीपवत् स्वपरगतं सामान्यं विशेषं च जानाति । तेन कारणेनाभेदेन तस्यैव प्रमाणत्वमिति ।

---

आत्माको जाननेके अभावरूप दूषण प्राप्त होता है अर्थात् आत्माका ज्ञान न होनेरूप दोष होता है, और जैनमतमें आत्मा ज्ञान गुणसे तो पर पदार्थको जानता है तथा दर्शन गुणसे आत्माको जानता है, इस कारण जैनमतमें आत्माके जाननेका अभावरूप जो दूषण है वह प्राप्त नहीं होता अर्थात् जैनमतमें आत्माका जानना सिद्ध ही है । यह दूषण क्यों नहीं होता है यह पूछो तो उत्तर यह है कि, जैसे एक भी अग्नि दहन गुणसे जलाता है इस हेतुसे दाहक कहलाता है, और पाचनरूप गुणसे पकाता है इस कारण पाचक कहलाता है । इसी प्रकार विषयके भेदसे दाहक-पाचक रूप दो प्रकार भेदको प्राप्त होता है अर्थात् एक ही अग्नि दाहक और पाचकभेदसे दो प्रकारका है । उसी प्रकार अभेदनयसे एक भी चैतन्य भेदनयकी विवक्षामें जब आत्माको ग्रहण करनेवाले रूपसे प्रवृत्त हुआ तब तो उसका 'दर्शन' यह नाम हुआ, और फिर जब पर पदार्थको ग्रहण करनेरूप प्रवृत्त हुआ तब उस चैतन्यका 'ज्ञान' यह नाम हुआ । इस प्रकार विषयके भेदसे चैतन्य दो प्रकारसे भेदको प्राप्त होता है अर्थात् एक ही चैतन्य दर्शन और ज्ञानरूप भेदसे दो प्रकारका होता है । और विशेष वार्त्ता यह है कि, यदि सामान्यके ग्रहण करनेवालेको दर्शन और विशेषके ग्रहण करनेवाले को ज्ञान कहा जावे तो ज्ञानके प्रमाणताकी प्राप्ति नहीं होती है । ज्ञानके प्रमाणत्व क्यों नहीं होता यह शंका करो तो समाधान यह है कि, जो वस्तुको ग्रहण करनेवाला है उसको प्रमाण कहते हैं । और वस्तु सामान्य तथा विशेष इन दोनों स्वरूप है, और ज्ञानने वस्तुका एकदेश जो विशेष है वह ही ग्रहण किया न कि संपूर्ण वस्तु, और सिद्धान्तसे निश्चयनयकी विवक्षामें गुण और गुणीके भेद नहीं है, इस कारण संशय, विमोह ( अनध्यवसाय ) और विभ्रम ( विपर्यय ) इन तीनोंसे रहित जो वस्तुका ज्ञान है उस ज्ञानस्वरूप आत्मा ही प्रमाण है । क्योंकि, ज्ञान आत्माका गुण है और आत्मा ज्ञानगुणको धारण करता है इसलिये गुणी है । गुण और गुणीके निश्चयसे अभेद है । और वह

अथ मतं—यदि दर्शनं बहिर्विषये न प्रवर्त्तते तदान्धवत् सर्वजनानामन्धत्वं प्राप्नोतीति नैवं वक्तव्यम्। बहिर्विषये दर्शनाभावेऽपि ज्ञानेन विशेषेण सर्वं परिच्छिनत्तीति। अयं तु विशेषः-दर्शनेनात्मनि गृहीते सत्यात्माविनाभूतं ज्ञानमपि गृहीतं भवति; ज्ञाने च गृहीते सति ज्ञानविषयभूतं बहिर्वस्त्वपि गृहीतं भवतीति। अथोक्तं भवता यद्यात्मग्राहकं दर्शनं भण्यते, तर्हि 'जं सामाण्णं गहणं भावाणं तद्दर्शनमिति' गाथार्थः कथं घटते? तत्रोत्तरं, सामान्यग्रहणमात्मग्रहणं तद्दर्शनं। कस्मादिति चेत्—आत्मा वस्तुपरिच्छित्तिं कुर्वन्निदं जानामीदं न जानामीति विशेषपक्षपातं न करोति, किन्तु सामान्येन वस्तु परिच्छिनत्ति। तेन कारणेन सामान्यशब्देनात्मा भण्यत इति गाथार्थः।

किंबहुना, यदि कोऽपि तर्कार्थं सिद्धान्तार्थं च ज्ञात्वैकान्तदुराग्रहत्यागेन नयविभागेन मध्यस्थवृत्त्या व्याख्यानं करोति, तदा द्वयमपि घटत इति। कथमिति चेत्—तर्के मुख्यवृत्त्या परसमयव्याख्यानं। तत्र यदा कोऽपि परसमयी पृच्छति-जैनागमे दर्शनं ज्ञानं

---

प्रमाण जैसे प्रदीप अपने और परका प्रकाशक है, उसी प्रकार अपनेमें प्राप्त सामान्यको और पर पदार्थमें प्राप्त विशेषको जानता है। इस कारण अभेदसे आत्माके ही प्रमाणत्व है।

अब ऐसा कहो कि, यदि दर्शन बाह्य विषयमें नहीं प्रवर्त्तता है तो अंधेकी तरह सब मनुष्योंके अंधेपनेकी प्राप्ति होती है। तो समाधान यह है कि, ऐसा न कहना चाहिये। क्योंकि, यद्यपि बाह्य विषयमें दर्शनका अभाव है, तथापि आत्मा ज्ञानद्वारा विशेष रूपसे सब पदार्थोंको जानता है। और अधिक वार्ता यह है कि जब दर्शनसे आत्माका ग्रहण होता है तब आत्मा में व्याप्त जो ज्ञान है वह भी दर्शन करके ग्रहण किया जाता है, और जब दर्शनने ज्ञानको ग्रहण किया तो ज्ञानकी विषयभूत जो बाह्य वस्तु है उसका भी ग्रहण किया। अब कदाचित् यह कहो कि, जो आप आत्माको ग्रहण करनेवालेको दर्शन कहते हो तो "जो पदार्थोंका सामान्य ग्रहण है वह दर्शन कहलाता है" यह जो गाथाका अर्थ है वह आपके कथनमें कैसे घटता है? तो इसका यह उत्तर है कि, वहांपर सामान्य ग्रहण इस शब्दका आत्माका ग्रहण करनेरूप अर्थ है और वह आत्मग्रहण ही दर्शन है। ऐसा अर्थ क्यों है? यह पूछो तो उत्तर यह है कि, वस्तुका ज्ञान करता हुआ जो आत्मा है वह 'मैं इसको जानता हूं, इसको नहीं जानता हूं', इस प्रकारसे जो विशेष पक्षपात है उसको नहीं करता है, किंतु सामान्यरूपसे वस्तु (पदार्थ)को जानता है, इस कारण सामान्य इस शब्दसे आत्मा कहा जाता है। यह गाथाका अर्थ है।

बहुत कहनेसे क्या? यदि कोई भी तर्क (न्याय) के और सिद्धान्तके अर्थको जानकर एकान्तरूप जो दुराग्रह (बुरा हठ) है उसका त्याग करके, नयोंके विभागसे मध्यस्थता धारण करके व्याख्यान करता है तब तो सामान्य और विशेष ये दोनों ही सिद्ध

चेति गुणद्वयं जीवस्य कथ्यते, तत्कथं घटत इति। तदा तेषामात्मग्राहकं दर्शनमिति कथिते सति ते न जानन्ति। पश्चादाचार्यैस्तेषां प्रतीत्यर्थं स्थूलव्याख्यानेन 'बहिर्विषये यत् सामान्यपरिच्छेदनं तस्य सत्तावलोकनदर्शनसंज्ञा स्थापिता। यच्च शुक्लमिदमित्यादिविशेषपरिच्छेदनं तस्य ज्ञानसंज्ञा स्थापितेति दोषो नास्ति। सिद्धान्ते पुनः स्वसमयव्याख्यानं मुख्यवृत्त्या। तत्र सूक्ष्मव्याख्याने क्रियमाणे सत्याचार्यैरात्मग्राहकं दर्शनं व्याख्यातमित्यत्रापि दोषो नास्ति।

अत्राह शिष्यः—सत्तावलोकनदर्शनस्य ज्ञानेन सह भेदो ज्ञातस्तावदिदानीं यत्तत्त्वार्थश्रद्धानरूपं सम्यग्दर्शनं वस्तुविचाररूपं सम्यग्ज्ञानं तयोर्विशेषो न ज्ञायते। कस्मादितिचेत्—सम्यग्दर्शने पदार्थनिश्चयोऽस्ति, तथैव सम्यग्ज्ञाने च को विशेष इति। अत्र परि-

---

होते हैं। कैसे सिद्ध होते हैं? ऐसा पूछो तो उत्तर यह है कि, तर्क (न्याय) में मुख्यतासे परसमय अर्थात् अन्यमतका व्याख्यान है। इसलिये उसमें यदि कोई अन्यमतावलम्बी पूछै कि, जैनमतमें जीवके दर्शन और ज्ञान ये जो दो गुण कहे जाते हैं वे कैसे सिद्ध होते हैं? तब इसके उत्तरमें यदि उन अन्यमतियोंको यह कहैं कि, जो आत्माको ग्रहण करनेवाला है उसको दर्शन कहते हैं; तो ऐसा कहनेपर वे अन्यमती नहीं समझते हैं। तब आचार्योंने उनके प्रतीति होनेके लिये विस्ताररूप व्याख्यानसे जो बाह्यविषयमें सामान्य जानना है उसको तो 'दर्शन' ऐसी संज्ञा (नाम) स्थापित की, और जो 'यह शुक्ल (सफेद) है' इत्यादि रूपसे बाह्यमें विशेषका जानना है, उसकी 'ज्ञान' यह संज्ञा ठहराई, इसलिये दोष नहीं है। और सिद्धान्तमें मुख्यतासे निजसमय (जैनमत)का व्याख्यान है, इसलिये सिद्धान्तमें जब सूक्ष्म व्याख्यान किया गया तब आचार्योंने जो आत्माका ग्राहक है उसको दर्शन कहा। इस कारण इस कथनमें भी दोष नहीं है।

अब यहां शिष्य कहता है कि हे गुरो! सत्ताका अवलोकन करनेवाला जो दर्शन है उसका तो ज्ञानके साथ भेद जाना। अब "जो तत्त्वार्थका श्रद्धान करनेरूप सम्यग्दर्शन और पदार्थका विचार करने स्वरूप सम्यग्ज्ञान है" इन दोनोंमें भेद नहीं जाना जाता। क्यों नहीं जाना जाता? यह पूछैं तो उत्तर यह है कि, पदार्थका निश्चय सम्यग्दर्शनमें है, वही सम्यग्ज्ञानमें है। इसलिये सम्यग्दर्शन और सम्यग्ज्ञानमें क्या भेद है अर्थात् कुछ भी नहीं। अब इस शिष्यकी शंकाका आचार्य समाधान करते हैं कि, पदार्थके ग्रहण करनेमें जाननेरूप जो क्षयोपशम विशेष है, वह ज्ञान कहलाता है। और उस ज्ञानमें ही भेदनयसे जो वीतराग सर्वज्ञ श्रीजिनेन्द्रद्वारा कहे हुए शुद्ध आत्मा आदि तत्त्व हैं उनमें यह ही तत्त्व है, ऐसा ही तत्त्व है, इस प्रकारका जो निश्चय है वह सम्यक्त्व है। और अभेदनयसे अर्थात् अभेदरूपसे तो जो ही सम्यग्ज्ञान है वही सम्यग्दर्शन है। ऐसा किस कारणसे है? यह पूछो तो उत्तर यह है कि, तत्त्व नहीं है उसमें तत्त्वकी

हारः। अर्थग्रहणपरिच्छित्तिरूपः क्षयोपशमविशेषो ज्ञानं भण्यते, तत्रैव भेदनयेन वीतरागसर्वज्ञप्रणीतशुद्धात्मादितत्त्वेष्विदमेवेत्थमेवेति निश्चयसम्यक्त्वमिति। अविकल्परूपेणाभेदनयेन पुनर्यदेव सम्यग्ज्ञानं तदेव सम्यक्त्वमिति। कस्मादिति चेत्—अतत्त्वे तत्त्वबुद्धिरदेवे देवबुद्धिरधर्मे धर्मबुद्धिरित्यादिविपरीताभिनिवेशरहितस्य ज्ञानस्यैव सम्यग्विशेषणवाच्योऽवस्थाविशेषः सम्यक्त्वं भण्यते यतः कारणात्।

यदि भेदो नास्ति तर्हि कथमावरणद्वयमिति चेत्—तत्रोत्तरम्। येन कर्मणार्थपरिच्छित्तिरूपः क्षयोपशमः प्रच्छाद्यते तस्य ज्ञानावरणसंज्ञा, तस्यैव क्षयोपशमविशेषस्य यत् कर्म पूर्वोक्तलक्षणं विपरीताभिनिवेशमुत्पादयति तस्य मिथ्यात्वसंज्ञेति भेदनयेनावरणभेदः। निश्चयनयेन पुनरभेदविवक्षायां कर्मत्वं प्रत्यावरणद्वयमप्येकमेव विज्ञातव्यम्। एवं दर्शनपूर्वकं ज्ञानं भवतीति व्याख्यानरूपेण गाथा गता॥ ४४॥

अथ सम्यग्दर्शनज्ञानपूर्वकं रत्नत्रयात्मकमोक्षमार्गतृतीयावयवभूतं स्वशुद्धात्मानुभूतिरूपशुद्धोपयोगलक्षणवीतरागचारित्रस्य पारम्पर्येण साधकं सरागचारित्रं प्रतिपादयति;—

असुहादो विणिवित्ती सुहे पवित्ती य जाण चारित्तं।
वदसमिदिगुत्तिरूवं ववहारणयादु जिणभणियम्॥ ४५॥

---

बुद्धि करना, देव नहीं है उसमें देवकी बुद्धि करना और अधर्ममें धर्मकी बुद्धि करना इत्यादि रूपसे जो विपरीत अभिनिवेश (उलटा आग्रह) है, उस विपरीताभिनिवेशसे रहित जो ज्ञान है, उसीका जो सम्यग् इस विशेषणसे कहे जानेवाला अवस्थाविशेष है वह सम्यक्त्व कहलाता है। यही इस अर्थके करनेमें हेतु है।

जो सम्यग्दर्शन और सम्यग्ज्ञानमें भेद नहीं है तो आठ कर्मोंमें दर्शनावरण और ज्ञानावरण ये दो आवरण कैसे कहे गये हैं? यह शंका करो तो, यहां समाधानरूप उत्तर यह है कि, जिस कर्मसे पदार्थके जाननेरूप क्षयोपशम ढका जाता है, उसकी तो 'ज्ञानावरण' यह संज्ञा है। और उस ज्ञानावरणके क्षयोपशमविशेषके जो कर्म पहले कहे हुये लक्षणवाले विपरीत अभिनिवेशको उत्पन्न करता है, उसकी मिथ्यात्व यह संज्ञा है। इस कारण भेदनयसे आवरणका भेद है। और अभेदकी विवक्षामें कर्मत्वके प्रति जो दो आवरण हैं उन दोनोंको एक ही जानना चाहिये। इस प्रकार दर्शन पहले हो लेता है तब ज्ञान होता है; ऐसे व्याख्यान करनेवाली जो गाथा है वह समाप्त हुई॥ ४४॥

अब सम्यग्दर्शन और सम्यग्ज्ञानके पीछे होनेवाला रत्नत्रयस्वरूप जो मोक्षमार्ग है, उसका तीसरा अवयवरूप और निज शुद्ध आत्माके अनुभवस्वरूप जो शुद्धोपयोगरूप लक्षणका धारक-वीतरागचारित्र है, उसको परंपरासे साधनेवाला जो सरागचारित्र है, उसका प्रतिपादन करते हैं,—

**गाथाभावार्थः**—जो अशुभ (बुरे) कार्यसे दूर होना और शुभ कार्यमें प्रवृत्त होना अर्थात् लगना है उसको चारित्र जानना चाहिये। श्रीजिनेन्द्रदेवने व्यवहारनयसे उस चारित्रको ५ व्रत, ५ समिति और ३ गुप्तिस्वरूप कहा है॥ ४५॥

व्याख्या। अस्यैव सरागचारित्रस्यैकदेशावयवभूतं देशचारित्रं तावत्कथ्यते। तद्यथा—मिथ्यात्वादिसप्तप्रकृत्युपशमक्षयोपशमक्षये सति, अध्यात्मभाषया निजशुद्धात्माभिमुखपरिणामे वा सति शुद्धात्मभावनोत्पन्ननिर्विकारवास्तवसुखामृतमुपादेयं कृत्वा संसारशरीरभोगेषु योऽसौ हेयबुद्धिः सम्यग्दर्शनशुद्धः स चतुर्थगुणस्थानवर्त्ती व्रतरहितो दर्शनिको भण्यते। यश्च प्रत्याख्यानावरणसंज्ञिद्वितीयकषायक्षयोपशमे जाते सति पृथिव्यादिपञ्चस्थावरवधे प्रवृत्तोऽपि यथाशक्त्या त्रसवधे निवृत्तः स पञ्चमगुणस्थानवर्त्ती श्रावको भण्यते। तस्यैकादशभेदाः कथ्यन्ते। तथाहि—सम्यक्त्वपूर्वकत्वेन मद्यमांसमधुत्यागोदुम्बरपञ्चकपरिहाररूपाष्टमूलगुणसहितः सन् संग्रामादिप्रवृत्तोऽपि पापर्द्ध्यादिभिर्निष्प्रयोजनजीवघातादौ निवृत्तः प्रथमो दर्शनिकश्रावको भण्यते। स एव सर्वथा त्रसवधे निवृत्तः सन् पञ्चाणुव्रतत्रयगुणव्रतशिक्षाव्रतचतुष्टयसहितो द्वितीयव्रतिकसंज्ञो भवति। स एव त्रिकालसामायिके प्रवृत्तः तृतीयः, प्रोषधोपवासे प्रवृत्तश्चतुर्थः, सचित्तपरिहारेण पञ्चमः, दिवा ब्रह्मचर्येण षष्ठः, सर्वथा ब्रह्मचर्येण सप्तमः, आरम्भादिसमस्तव्यापारनिवृत्तोऽष्टमः, वस्त्र-

---

व्याख्यार्थः—अब प्रथम ही इसी सरागचारित्रका अवयवरूप जो देशचारित्र है उसका कथन करते हैं। वह इस प्रकार है—मिथ्यात्व आदि सात ७ प्रकृतियोंका उपशम, क्षयोपशम अथवा क्षय होनेपर अथवा अध्यात्मभाषाके अनुसार निज शुद्ध आत्माके सन्मुख परिणाम होनेपर जो जीव शुद्ध आत्माकी भावनासे उत्पन्न-विकाररहित-यथार्थ सुखरूपी अमृतको ग्रहण करने योग्य करके, संसार, शरीर और भोगोंमें हेयबुद्धि है अर्थात् संसार, शरीर और भोग ये सब त्यागने योग्य हैं ऐसा समझता है, और सम्यग्दर्शनसे शुद्ध है, उसको चतुर्थ गुणस्थानमें रहनेवाला व्रतरहित दर्शनिक कहते हैं। और जो प्रत्याख्यानावरण नामक दूसरे क्रोधादिकषायोंका क्षयोपशम होनेपर पृथिवी, जल, अग्नि वायु और वनस्पति इन पांच स्थावरोंके वधमें प्रवृत्त हो तो भी अपनी शक्तिके अनुसार त्रसजीवोंके वधसे रहित होता है अर्थात् यथाशक्ति दोइन्द्रिय आदि त्रसजीवोंकी हिंसा नहीं करता है उसको पंचम गुणस्थानवर्त्ती श्रावक कहते हैं।

अब उस पंचम गुणस्थानवर्त्ती श्रावकके ग्यारह (११) भेदोंको कहते हैं। वे इस प्रकार हैं—पहले सम्यग्दर्शनको धारण करके मद्य (मदिरा), मांस और शहद इन तीनोंके और उदुम्बर आदि पांच फलोंके त्यागरूप जो आठ मूलगुण हैं उनसहित हुआ जो जीव युद्ध आदिमें प्रवृत्त होनेपर भी शिकार आदिसे प्रयोजनके विना जीवघात नहीं करता है उसको पहला दर्शनिक श्रावक कहते हैं और वही प्रथम दर्शनिक श्रावक जब त्रसजीवकी हिंसासे सर्वथा रहित होकर पांच अणुव्रत, तीन गुणव्रत और चार शिक्षाव्रतोंसे सहित होता है तब दूसरा व्रतिक (व्रती) इस नामका धारक होता है। वही-जब त्रिकाल सामायिकमें प्रवृत्त होता है तब तीसरी प्रतिमाका धारी होता है। प्रोषध उपवासमें प्रवृत्त होता है तब चौथी प्रतिमाका धारी होता है। सचित्तके त्यागसे पांचवीं प्रतिमाका धारक

प्रावरणं विहायान्यसर्वपरिग्रहनिवृत्तो नवमः, गृहव्यापारादिसर्वसावद्यानुमतनिवृत्तो दशमः, उद्दिष्टाहारनिवृत्त एकादशम इति। एतेष्वेकादशश्रावकेषु मध्ये प्रथमषट्कं तारतम्येन जघन्यम्, ततश्च त्रयं मध्यमम्, ततो द्वयमुत्तममिति संक्षेपेण दर्शनिकश्रावकाद्येकादशभेदाः ज्ञातव्याः ॥

अथैकदेशचारित्रव्याख्यानानन्तरं सकलचारित्रमुपदिशति। "असुहादो विणिवित्ती सुहे पवित्ती य जाण चारित्तं" अशुभान्निवृत्तिः शुभे प्रवृत्तिश्चापि जानीहि चारित्रम्। तच्च कथम्भूतं—"वदसमिदिगुत्तिरूवं ववहारणयादु जिणभणियं" व्रतसमितिगुप्तिरूपं व्यवहारनयाज्जिनैरुक्तमिति। तथाहि—प्रत्याख्यानावरणसंज्ञतृतीयकषायक्षयोपशमे सति "विसयकसाओगाढो दुस्सुदिदुच्चित्तदुट्ठगोट्ठिजुदो। उग्गो उम्मग्गपरो उवओगो जस्स सो असुहो। ४।" इति गाथाकथितलक्षणादशुभोपयोगान्निवृत्तिस्तद्विलक्षणे शुभोपयोगे प्रवृत्तिश्च हे शिष्य चारित्रं जानीहि। तच्चाचाराराधनादिचरणशास्त्रोक्तप्रकारेण पञ्चमहा-

—होता है। दिनमें ब्रह्मचर्य धारण करनेसे छट्ठी प्रतिमावाला कहलाता है। सर्वथा ब्रह्मचर्यको धारण करनेसे सप्तम प्रतिमाका धारी होता है। आरंभ आदि संपूर्ण व्यापारोंसे रहित होता है तब अष्टम प्रतिमाका धारी कहा जाता है। वस्त्रके आच्छादनको छोड़कर अन्य सब परिग्रहोंसे रहित होता है तब नवमी प्रतिमाका धारक होता है। गृहसंबंधी व्यापार आदि संपूर्ण सावद्य (हिंसासहित) कार्योंमें जब संमति (सलाह) देनेसे रहित होता है तब दशमी प्रतिमाका धारी कहलाता है। अपने निमित्त किये हुये आहारका त्याग करनेवाला ग्यारहवीं प्रतिमाका धारी श्रावक कहा जाता है। इन प्रतिमाभेदसे ग्यारह प्रकारके श्रावकोंके बीचमें जो पहली छः प्रतिमायें हैं उनमें रहनेवाले तारतम्य (हीनाधिकता) से जघन्य श्रावक हैं। उनके आगे सातवीं, आठवीं और नववीं प्रतिमाके धारक मध्यम श्रावक हैं। इनके पश्चात् दसवीं और ग्यारहवीं इन दो प्रतिमाओंके धारक उत्तम श्रावक हैं। इस प्रकार संक्षेपसे देशचारित्रके दर्शनिक आदि ग्यारह भेद जानने चाहिये।

अब इस एकदेशचारित्रके व्याख्यानके पश्चात् सकलचारित्रका उपदेश करते हैं। "असुहादो विणिवित्ती सुहे पवित्ती य जाण चारित्तं" हे शिष्य! अशुभसे निवृत्ति (रहितता) और शुभमें जो प्रवृत्ति है उसको चारित्र जानो। वह कैसा है? "वदसमिदिगुत्तिरूवं ववहारणयादु जिणभणियं" व्रत, समिति और गुप्तिस्वरूप है; ऐसा व्यवहारनयसे श्रीजिनेन्द्रने कहा है। सो ही दिखाते हैं—प्रत्याख्यानावरण नामक तीसरे कषायका क्षयोपशम होनेपर "जिसका विषयों और कषायोंमें गाढा, दुःश्रुति (बुरा शास्त्रश्रवण) दुष्टचित्त और दुष्टगोष्ठी (बुरी संगति) इनसे सहित, उग्र तथा उन्मार्ग (बुरे मार्ग) में तत्पर ऐसा उपयोग है वह जीव अशुभमें स्थित है। १।" इस गाथामें कहे-

व्रतपञ्चसमितित्रिगुप्तिरूपमप्यपहृतसंयमाख्यं शुभोपयोगलक्षणं सरागचारित्राभिधानं भवति । तत्र योऽसौ बहिर्विषये पञ्चेन्द्रियविषयादिपरित्यागः स उपचरितासद्भूतव्यवहारेण, यश्चाभ्यन्तरे रागादिपरिहारः स पुनरशुद्धनिश्चयेनेति नयविभागो ज्ञातव्यः । एवं निश्चयचारित्रसाधकं व्यवहारचारित्रं व्याख्यातमिति ॥ ४५ ॥

अथ तेनैव व्यवहारचारित्रेण साध्यं निश्चयचारित्रं निरूपयति;—

बहिरब्भंतरकिरियारोहो भवकारणपणासट्ठं ।
णाणिस्स जं जिणुत्तं तं परमं सम्मचारित्तं ॥ ४६ ॥

व्याख्या । "तं" तत् "परमं" परमोपेक्षालक्षणं निर्विकारस्वसंवित्त्यात्मकशुद्धोपयोगाविनाभूतं परमं "सम्मचारित्तं" सम्यक्चारित्रं ज्ञातव्यम् । तत्किं ? "बहिरब्भंतरकिरियारोहो" निष्क्रियनित्यनिरञ्जनविशुद्धज्ञानदर्शनस्वभावस्य निजात्मनः प्रतिपक्षभूतस्य बहिर्विषये शुभाशुभवचनकायव्यापाररूपस्य तथैवाभ्यन्तरे शुभाशुभमनोविकल्परूपस्य च

---

हुए लक्षणके धारक अशुभोपयोगसे रहितपना और उक्त अशुभोपयोगसे विलक्षण ( उलटा ) जो शुभोपयोग है उसमें प्रवृत्त होना जो है उसको हे शिष्य ! तुम चारित्र जानो और वह चारित्र मूलाचार, भगवती आराधना आदि चरणानुयोगके शास्त्रोंमें कहे हुए प्रकारसे पांच महाव्रत, पांच समिति और तीन गुप्तिरूप है, तो भी अपहृतसंयम नामक शुभोपयोगलक्षणका धारक, सरागचारित्र नामक चारित्र होता है । उसमें जो बाह्यविषयोंमें पांचों इन्द्रियोंके विषय वगैरहका त्याग है वह तो उपचरित-असद्भूत-व्यवहारनयसे चारित्र है, और जो अन्तरंगमें राग आदिका त्याग है वह अशुद्ध निश्चयनयसे चारित्र है । इस प्रकार नयोंका विभाग जानना चाहिये । ऐसे निश्चयचारित्रको साधनेवाला जो व्यवहारचारित्र है उसका व्याख्यान किया गया ॥ ४५ ॥

अब इसी पूर्वोक्त व्यवहारचारित्रसे सिद्ध होने योग्य जो निश्चयचारित्र है उसका निरूपण करते हैं:—

गाथाभावार्थः—ज्ञानी जीवके जो संसारके कारणोंको नष्ट करनेके लिये बाह्य और अंतरंग क्रियाओंका निरोध है, वह श्रीजिनेन्द्रसे कहा हुआ उत्कृष्ट सम्यक्चारित्र है ॥४६॥

व्याख्यार्थः—"तं" वह "परमं" परम उपेक्षा ( अनादर ) स्वरूप लक्षणका धारक, और विकाररहित निजसंवेदनरूप जो शुद्धोपयोग है उससे व्याप्त होनेसे उत्कृष्ट "सम्मचारित्तं" सम्यक् चारित्र जानना चाहिये । वह क्या ? "बहिरब्भंतरकिरियारोहो" क्रियारहित-नित्य-निरंजन और निर्मल ज्ञान तथा दर्शनरूप स्वभावका धारक जो अपना आत्मा है उससे प्रतिपक्षभूत ( प्रतिकूल )-बाह्य विषयमें शुभ-अशुभ-वचन कायके व्यापाररूप, और इसी प्रकार अन्तरंगमें शुभ-अशुभ-मनके विकल्परूप जो क्रियाका व्यापार है उसका जो निरोध अर्थात् त्याग है वह । वह त्याग किस लिये है ?

क्रियाऽव्यापारस्य योऽसौ निरोधस्त्यागः स च किमर्थं "भवकारणपणासट्ठं" पञ्चप्रकारभवातीतनिर्दोषपरमात्मनो विलक्षणस्य भवस्य संसारस्य व्यापारकारणभूतो योऽसौ शुभाशुभकर्मास्रवस्तस्य प्रणाशार्थं विनाशार्थमिति । इत्युभयक्रियानिरोधलक्षणचारित्रं कस्य भवति ? "णाणिस्स" निश्चयरत्नत्रयात्मकाभेदज्ञानिनः । पुनरपि किं विशिष्टं ? "जं जिणुत्तं" यज्जिनेन वीतरागसर्वज्ञेनोक्तमिति ॥ ४६ ॥

एवं वीतरागसम्यक्त्वज्ञानाविनाभूतं निश्चयरत्नत्रयात्मकनिश्चयमोक्षमार्गतृतीयावयवरूपं वीतरागचारित्रं व्याख्यातम् ॥ इति द्वितीयस्थले गाथाषट्कं गतम् ॥

एवं मोक्षमार्गप्रतिपादकतृतीयाधिकारमध्ये निश्चयव्यवहारमोक्षमार्गसंक्षेपकथनेन सूत्रद्वयम्, तदनन्तरं तस्यैव मोक्षमार्गस्यावयवभूतानां सम्यग्दर्शनज्ञानचारित्राणां विशेषविवरणरूपेण सूत्रषट्कं चेति स्थलद्वयसमुदायेनाष्टगाथाभिः प्रथमोऽन्तराधिकारः समाप्तः ॥

अतः परं ध्यानध्यातृध्येयध्यानफलकथनमुख्यत्वेन प्रथमस्थले गाथात्रयम्, ततः परं पञ्चपरमेष्ठिव्याख्यानरूपेण द्वितीयस्थले गाथापञ्चकम्, ततश्च तस्यैव ध्यानस्योपसंहार-

---

"भवकारणपणासट्ठं" पांच प्रकारके संसारसे रहित जो निर्दोष परमात्मा है उससे भिन्न लक्षणका धारक जो संसार उसके व्यापारका कारणभूत जो शुभ-अशुभ-कर्मोंका आस्रव उसके विनाशके लिये है । पूर्वोक्त प्रकारसे बाह्य और अंतरंग भेदसे जो दो प्रकारकी क्रियायें हैं उनका त्यागरूप चारित्र किसके होता है ? "णाणिस्स" निश्चय रत्नत्रयस्वरूप अभेदज्ञानके धारक जीवके । फिर कैसा है वह चारित्र ? "जं जिणुत्तं" जो जिन अर्थात् श्रीवीतरागसर्वज्ञदेवसे कहा हुआ है । भावार्थ—ज्ञानी जीवके संसारके कारणोंको दूर करनेके लिये जो बाह्य और अंतरंगकी शुभ-अशुभ क्रियाओंका त्याग होता है वह श्रीजिनेन्द्र द्वारा कहा हुआ परम सम्यक्चारित्र है ॥ ४६ ॥

इस प्रकार वीतरागसम्यक्त्व और ज्ञानके विना नहीं होनेवाला और निश्चयरत्नत्रयस्वरूप जो निश्चयमोक्षमार्ग है उसका तीसरा अवयवरूप जो वीतरागचारित्र है उसका व्याख्यान किया। ऐसे दूसरे स्थलमें ६ गाथायें समाप्त हुईं ।

इस प्रकार मोक्षमार्गको प्रतिपादन करनेवाला जो तीसरा अधिकार है उसमें निश्चय और व्यवहाररूप मोक्षमार्गके कथनसे दो सूत्र और उसके पश्चात् उसी मोक्षमार्गके अवयवरूप जो सम्यग्दर्शन, ज्ञान और चारित्र हैं उनके विशेष व्याख्यानरूपसे छः सूत्र, इस रीतिसे दो स्थलोंके समुदाय ( जोड़ने ) से जो आठ गाथायें हैं उनसे प्रथम अन्तराधिकार समाप्त हुआ ॥

अब इसके आगे ध्यान, ध्याता (ध्यान करनेवाला), ध्येय (ध्यान करने योग्य पदार्थ) और ध्यानका फल, इनके कथनकी मुख्यतासे प्रथम स्थलमें तीन गाथायें, इसके पश्चात् पंच परमेष्ठियोंके व्याख्यानरूपसे दूसरे स्थलमें पांच गाथायें, और इसके अनन्तर उसी ध्यानके

रूपविशेषव्याख्यानेन तृतीयस्थले सूत्रचतुष्टयमिति स्थलत्रयसमुदायेन द्वादशसूत्रेषु द्वितीयान्तराधिकारे समुदायपातनिका ।

तथाहि । निश्चयव्यवहारमोक्षमार्गसाधकध्यानाभ्यासं कुरुत यूयमित्युपदिशति;—

दुविहं पि मुक्खहेउं झाणे पाउणदि जं मुणी णियमा ।
तह्मा पयत्तचित्ता जूयं झाणं समब्भसह ॥ ४७ ॥

व्याख्या । "दुविहं पि मुक्खहेउं झाणे पाउणदि जं मुणी णियमा" द्विविधमपि मोक्षहेतुं ध्यानेन प्राप्नोति यस्मात् मुनिर्नियमात् । तद्यथा—निश्चयरत्नत्रयात्मकं निश्चयमोक्षहेतुं निश्चयमोक्षमार्गं तथैव व्यवहाररत्नत्रयात्मकं व्यवहारमोक्षहेतुं व्यवहारमोक्षमार्गं च यं साध्यसाधकभावेन कथितवान् पूर्वं तद्द्विविधमपि निर्विकारस्वसंवित्त्यात्मकपरमध्यानेन मुनिः प्राप्नोति यस्मात्कारणात् "तह्मा पयत्तचित्ता जूयं झाणं समब्भसह" तस्मात् प्रयत्नचित्ताः सन्तो हे भव्या यूयं ध्यानं सम्यगभ्यसत । तथा हि-तस्मात्कारणाद् दृष्टश्रुतानुभूतनानामनोरथरूपसमस्तशुभाशुभरागादिविकल्पजालं त्यक्त्वा परमस्वास्थ्यसमुत्पन्नसहजानन्दैकलक्षणसुखामृतरसास्वादानुभवे स्थित्वा च ध्यानाभ्यासं कुरुत यूयमिति ॥४४॥

---

उपसंहाररूप विशेष व्याख्यानद्वारा तीसरे स्थलमें चार गाथायें, इस प्रकार तीन स्थलोंके समुदायसे बारह गाथासूत्रोंका धारक जो तृतीय अधिकारमें दूसरा अन्तराधिकार है उसकी समुदायरूप भूमिका है ।

उसमें प्रथम ही तुम निश्चय और व्यवहारमोक्षमार्गको साधनेवाला जो ध्यान है उसका अभ्यास करो, ऐसा उपदेश देते हैं,—

गाथाभावार्थः—मुनि ध्यानके करनेसे जो नियमसे निश्चय और व्यवहार इन दोनों स्वरूप मोक्षमार्गको पाता है। इस कारणसे हे भव्यो ! तुम चित्तको एकाग्र करके ध्यानका अभ्यास करो ॥ ४७ ॥

व्याख्यार्थः—"दुविहं पि मुक्खहेउं झाणे पाउणदि जं मुणी णियमा" जिससे कि मुनि नियमसे ध्यान करके दोनों प्रकारसे मोक्षकारणोंको प्राप्त होता है । वे दोनों मोक्षके कारण इस प्रकार हैं-निश्चयरत्नत्रयस्वरूप निश्चयमोक्षकारण अर्थात् निश्चयमोक्षमार्ग और इसी प्रकार व्यवहाररत्नत्रयरूप व्यवहारमोक्षहेतु अर्थात् व्यवहारमोक्षमार्ग, इन दोनोंको पहले साध्यसाधकभावसे अर्थात् निश्चयमोक्षमार्ग साध्य ( साधनेयोग्य ) है और व्यवहारमोक्षमार्ग साधक (निश्चयमोक्षमार्गका साधनेवाला) है इस रूपसे जो पहले कहा है उस दोनों प्रकारके मोक्षमार्गको मुनि जिस कारणसे विकाररहित-निजसंवेदनस्वरूप परमध्यान करके प्राप्त होता है "तह्मा पयत्तचित्ता जूयं ज्झाणं समब्भसह" इसी कारणसे एकाग्रचित्त होकर हे भव्यजनो ! तुम भले प्रकारसे ध्यानका अभ्यास करो-अर्थात् मुनि ध्यानसे दोनों मोक्षमार्गोंको प्राप्त होते हैं इस कारणसे तुम देखा हुआ, सुना हुआ, और अनुभव किया हुआ जो अनेक प्रकारके मनोरथरूप संपूर्ण शुभ-अशुभ राग आदि

पुनरप्याह। तत्र प्रथमपादे ध्येयलक्षणं, द्वितीयपादे ध्यातृलक्षणं, तृतीयपादे ध्यानलक्षणं, चतुर्थपादेन नयविभागं कथयामीत्यभिप्रायं मनसि धृत्वा भगवान् सूत्रमिदं प्रतिपादयति;—

जं किंचिवि चिंतंतो णिरीहवित्ती हवे जदा साहू।
लद्धूणय एयत्तं तदाहु तं तस्स णिच्छयं झाणं ॥ ५५ ॥

व्याख्या—'तदा' तस्मिन् काले आहुर्ब्रुवन्ति 'तं तस्स णिच्छयं ज्झाणं' तत्तस्य निश्चयध्यानमिति। यदा किं 'णिरीहवित्ती हवे जदा साहू' निरीहवृत्तिर्निस्पृहवृत्तिर्यदा साधुर्भवति। किं कुर्वन् ' जं किंचिवि चिंतंतो' यत् किमपि ध्येयवस्तुरूपेण वस्तु चिन्तयन्निति। किं कृत्वा पूर्वं 'लद्धूणय एयत्तं' तस्मिन् ध्येये लब्ध्वा। किं ? एकत्वं एकाग्रचिन्तानिरोधनमिति। अथ विस्तारः—यत् किञ्चिद् ध्येयमित्यनेन किमुक्तं भवति ? प्राथमिकापेक्षया सविकल्पावस्थायां विषयकषायवञ्चनार्थं चित्तस्थिरीकरणार्थं पञ्चपरमेष्ठ्यादिपरद्रव्यमपि ध्येयं भवति। पश्चादभ्यासवशेन स्थिरीभूते चित्ते सति शुद्धबुद्धैकस्वभावनिजशुद्धात्मस्वरूपमेव ध्येयमित्युक्तं भवति। निस्पृहवचनेन पुनर्मिथ्यात्वं वेदत्रयं हास्यादिषट्कक्रोधादिचतुष्टयरूपचतुर्दशाऽभ्यन्तरपरिग्रहेण तथैव क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदास-

---

द्वितीय पादमें ध्याता ( ध्यान करनेवाले ) का लक्षण कहता हूं, तीसरे पादमें ध्यानका लक्षण कहता हूँ और चौथे पाद ( चरण ) से नयोंके विभागको कहता हूं। इस अभिप्रायको मनमें धारण करके भगवान् श्री नेमिचन्द्रस्वामी इस अग्रिम सूत्रका प्रतिपादन करते हैं;—

गाथाभावार्थः—ध्येय पदार्थमें एकाग्र चित्त होकर जिस किसी पदार्थको ध्यावता हुआ साधु जब निस्पृह वृत्ति ( सब प्रकारकी इच्छाओंसे रहित ) होता है उस समय वह उसका ध्यान निश्चय ध्यान होता है ऐसा आचार्य कहते हैं ॥ ५५ ॥

व्याख्यार्थः—"लद्धूणय एयत्तं" उस ध्येय पदार्थमें एकाग्रचिन्ताके निरोधको प्राप्त होकर अर्थात् एकचित्त होकर "जं किंचिवि चिंतंतो" जिस किसी पदार्थका ध्येयवस्तुके रूपसे चिंतवन करता हुआ "णिरीहवित्ती हवे जदा साहू" साधु जब निस्पृह वृत्तिको धारण करनेवाला होता है "तदाहु तं तस्स णिच्छयं ज्झाणं" उस समय आचार्य महाराज साधुके उस ध्यानको निश्चय ध्यान कहते हैं। अब विस्तारसे वर्णन करते हैं-गाथामें जो 'यत् किंचित् ध्येयम्' अर्थात् 'जिस किसी भी ध्येय पदार्थको' ऐसा पद है उससे क्या कहा गया है कि ? ध्यानकी प्रथम ही आरंभ करनेकी अपेक्षासे जो सविकल्प अवस्था है उसमें विषय और कषायोंको दूर करनेके लिये तथा चित्तको स्थिर करनेके लिये पंच परमेष्ठी आदि जो परद्रव्य हैं वे भी ध्येय होते हैं, फिर जब अभ्यासके वशसे चित्त स्थिर हो जाता है तब शुद्ध-बुद्ध एकस्वभावका धारक जो निज-शुद्ध आत्मा है उसका स्वरूप ही ध्येय होता है; यह कहा गया है। 'और निस्पृहवृत्ति होकर'

कुप्यभाण्डाऽभिधानदशविधबहिरङ्गपरिग्रहेण च रहितं ध्यातृस्वरूपमुक्तं भवति । एकाग्रचिन्तानिरोधेन च पूर्वोक्तविविधध्येयवस्तुनि स्थिरत्वं निश्चलत्वं ध्यानलक्षणं भणितमिति। निश्चयशब्देन तु प्राथमिकापेक्षया व्यवहाररत्नत्रयानुकूलनिश्चयो ग्राह्यः । निष्पन्नयोगनिश्चलपुरुषापेक्षया व्यवहाररत्नत्रयानुकूलनिश्चयो ग्राह्यः ॥ निष्पन्नयोगपुरुषापेक्षया तु शुद्धोपयोगलक्षणविवक्षितैकदेशशुद्धनिश्चयो ग्राह्यः । विशेषनिश्चयः पुनरग्रे वक्ष्यमाणस्तिष्ठतीति सूत्रार्थः ॥ ५५ ॥

अथ शुभाशुभमनोवचनकायनिरोधे कृते सत्यात्मनि स्थिरो भवति तदेव परमध्यानमित्युपदिशति;—

मा चिट्ठह मा जंपह मा चिन्तह किंवि जेण होइ थिरो ।
अप्पा अप्पम्मि रओ इणमेव परं हवे झाणं ॥ ५६ ॥

व्याख्या—'मा चिट्ठह मा जंपह मा चिंतह किंवि' नित्यनिरञ्जननिष्क्रियनिजशुद्धा-

---

यह जो वचन है इससे मिथ्यात्व १, पुंवेद २, स्त्रीवेद ३, नपुंसकवेद ४, हास्य ५, रति ६, अरति ७, शोक ८, भय ९, जुगुप्सा १०, क्रोध ११, मान १२, माया १३ और लोभ १४, इन रूप चौदह प्रकारके अन्तरङ्ग परिग्रहसे रहित तथा इसीप्रकार क्षेत्र १, वास्तु २, हिरण्य ३, सुवर्ण ४, धन ५, धान्य ६, दासी ७, दास ८, कुप्य ९ और भांड १०, नाम दशप्रकारके बहिरंग परिग्रहसे रहित ध्यान करनेवालेका स्वरूप कहा गया है। और 'एकाग्रचिन्तानिरोधको प्राप्त होकर' इस कथनसे पूर्वोक्त नाना प्रकारके ध्यान करनेयोग्य पदार्थोंमें जो निश्चलपना है उसको ध्यानका लक्षण कहा है। और "निश्चय ध्यान कहते हैं" यहांपर जो निश्चय शब्द हैं उससे अभ्यास करनेवाले पुरुषकी अपेक्षासे तो व्यवहाररत्नत्रयके अनुकूल निश्चय ग्रहण करना चाहिये और जिसके ध्यान सिद्ध हो गया है ऐसे पुरुषकी अपेक्षासे शुद्धोपयोगरूप लक्षणका धारक विवक्षितैकदेशशुद्धनिश्चय ग्रहण करना चाहिये । इससे विशेष ( ऊंचेदर्जेका ) जो निश्चय है वह आगेके सूत्रमें कहा है । इस प्रकार सूत्रका अर्थ है ॥ ५५ ॥

अब ध्यान करनेवाला पुरुष शुभ अशुभरूप मन, वचन और कायका निरोध कर चुकने पर जो आत्मामें स्थिर होता है वह आत्मामें स्थिर होना ही परम ध्यान है ऐसा उपदेश देते हैं;—

गाथाभावार्थः—हे ज्ञानी जनो ! तुम कुछ भी चेष्टा मत करो अर्थात् कायके व्यापारको मत करो, कुछ भी मत बोलो और कुछ भी मत विचारो । जिससे कि तुम्हारा आत्मा अपने आत्मामें तल्लीन स्थिर होवै; क्योंकि जो आत्मामें तल्लीन होना है वही परमध्यान है ॥ ५६ ॥

व्याख्यार्थः—हे ज्ञानी जनो ! "मा चिट्ठह मा जंपह मा चिंतह किंवि" नित्य निरञ्जन और क्रियारहित ऐसा जो निजशुद्ध आत्मा का अनुभव है उसको रोकनेवाला जो

त्मानुभूतिप्रतिबन्धकं शुभाशुभचेष्टारूपं कायव्यापारं, तथैव शुभाशुभान्तर्बहिर्जल्परूपं वचनव्यापारं, तथैव शुभाशुभविकल्पजालरूपं चित्तव्यापारञ्च किमपि माकुरुत हे विवेकिजनाः ! 'जेण होइ थिरो' येन योगत्रयनिरोधेन स्थिरो भवति। स कः 'अप्पा' आत्मा। कथम्भूतः स्थिरो भवति 'अप्पम्मि रओ' सहजशुद्धज्ञानदर्शनस्वभावपरमात्मतत्त्वसम्यक्श्रद्धानज्ञानानुचरणरूपाभेदरत्नत्रयात्मकपरमसमाधिसमुद्भूतसर्वप्रदेशाल्हादजनकसुखास्वादपरिणतिसहिते निजात्मनि रतः परिणतस्तल्लीयमानस्तच्चित्तस्तन्मयो भवति। 'इणमेव परं हवे ज्झाणं' इदमेवात्मसुखरूपे तन्मयत्वं निश्चयेन परमुत्कृष्टं ध्यानं भवति।

तस्मिन् ध्याने स्थितानां यद्वीतरागपरमानन्दसुखं प्रतिभाति, तदेव निश्चयमोक्षमार्गस्वरूपम्। तच्च पर्यायनामान्तरेण किं किं भण्यते तदभिधीयते। तदेव शुद्धात्मस्वरूपं, तदेव परमात्मस्वरूपं, तदेवैकदेशव्यक्तिरूपविवक्षितैकदेशशुद्धनिश्चयेन स्वशुद्धात्मसम्वित्तिसमुत्पन्नसुखामृतजलसरोवरे रागादिमलरहितत्वेन परमहंसस्वरूपम्। इदमेकदेशव्यक्तिरूपं शुद्धनयव्याख्यानमत्र परमात्मध्यानभावनानाम्मालायां यथासम्भवं सर्वत्र योजनीयमिति।

---

शुभ अशुभ चेष्टारूप कायका व्यापार है उसको, इसी प्रकार शुभ अशुभ अन्तरंग तथा बहिरंगरूप वचनके व्यापारको और इसी प्रकार शुभ-अशुभ विकल्पोंके समूहरूप मनके व्यापारको कुछ भी मत करो "जेण होइ थिरो" जिन मन, वचन और कायस्वरूप तीनों योगोंके रोकनेसे स्थिर होता है; वह कौन ? "अप्पा" आत्मा। कैसा स्थिर होता है। "अप्पम्मि रओ" सहज शुद्ध ज्ञान और दर्शन स्वभावको धारण करनेवाला जो परमात्मतत्त्व है उसके सम्यक् श्रद्धान-ज्ञान तथा आचरण करनेरूप जो अभेदरत्नत्रय है उस स्वरूप जो परम ध्यान है उससे उत्पन्न और सब प्रदेशोंको आनंद पैदा करनेवाला ऐसा जो सुख उसके आस्वादरूप परिणति सहित निज आत्मामें परिणत, तल्लीन, तन्मय तथा तच्चित्त होकर स्थिर होता है। "इणमेव परं हवे ज्झाणं" यही जो आत्माके सुखरूप में परिणमन होना है वह निश्चयसे परम अर्थात् उत्कृष्ट ध्यान होता है ॥

उस परमध्यानमें स्थित हुए जीवोंको वीतरागपरमानन्द सुख प्रतिभासता है वही निश्चयमोक्षमार्गस्वरूप है। वह दूसरे पर्यायनामोंसे क्या क्या कहलाता है अर्थात् उसको किन किन नामोंसे लोग कहते हैं सो कथन किया जाता है। वही शुद्ध आत्माका स्वरूप है, वही परमात्माका स्वरूप है, वही एक देशमें प्रकटतारूप ऐसे विवक्षित एक देश-शुद्धनिश्चयनयसे निजशुद्ध आत्माके ज्ञानसे उत्पन्न जो सुख वही हुआ जो अमृतजलका सरोवर उसमें राग आदि मलोंसे रहित होनेके कारण परमहंस स्वरूप है "इस परमात्मध्यानके भावनाके नामोंकी मालामें इस एकदेशव्यक्तिरूप शुद्धनयके व्याख्यानको यथासंभव सब जगह लगा लेना चाहिये अर्थात् यथासंभव ये सब नाम एकदेशशुद्ध निश्चयनयकी अपेक्षासे हैं ऐसा समझना चाहिये।

तदेव परब्रह्मस्वरूपं, तदेव परमविष्णुस्वरूपं, तदेव परमशिवस्वरूपं, तदेव परमबुद्धस्वरूपं, तदेव परमनिजस्वरूपं, तदेव परमस्वात्मोपलब्धिलक्षणं सिद्धस्वरूपं, तदेव निरञ्जनस्वरूपं, तदेवं निर्मलस्वरूपं, तदेव स्वसम्वेदनज्ञानं, तदेव परमतत्त्वज्ञानं, तदेव शुद्धात्मदर्शनं, तदेव परमावस्थास्वरूपं, तदेव परमात्मनः दर्शनं, तदेव परमतत्त्वज्ञानं, ज्ञानं तदेव ध्येयभूतशुद्धपारिणामिकभावरूपं, तदेव ध्यानभावनास्वरूपं, तदेव शुद्धचारित्रं, तदेवान्तस्तत्त्वं, तदेव परमतत्त्वं, तदेव शुद्धात्मद्रव्यं, तदेव परमज्योतिः, सैव शुद्धात्मानुभूतिः, सैवात्मप्रतीतिः, सैवात्मसम्वित्तिः, सैव स्वरूपोपलब्धिः, स एव नित्योपलब्धिः, स एव परमसमाधिः, स एव परमानन्दः, स एव नित्यानन्दः, स एव सहजानन्दः, स एव सदानन्दः, स एव शुद्धात्मपदार्थाध्ययनरूपः, स एव परमस्वाध्यायः, स एव निश्चयमोक्षोपायः, स एव चैकाग्रचिन्तानिरोधः, स एव परमबोधः, स एव शुद्धोपयोगः, स एव परमयोगः, स एव भूतार्थः, स एव परमार्थः, स एव निश्चयपञ्चाचारः, स एव समयसारः, स एवाध्यात्मसारः, तदेव समतादिनिश्चयषडावश्यकस्वरूपं, तदेवाभेदरत्नत्रयस्वरूपं, तदेव वीतरागसामायिकं, तदेव परमशरणोत्तममङ्गलं, तदेव केवलज्ञानोत्पत्तिकारणं, तदेव सकलकर्मक्षयकारणं, सैव निश्चयचतुर्विधाराधना,

---

वही परब्रह्मस्वरूप है, वही परमविष्णुरूप है, वही परमशिवस्वरूप है वही परमबुद्धस्वरूप है, वही परमनिजस्वरूप है, वही परम निज आत्माकी प्राप्तिरूप लक्षणका धारक जो सिद्ध है उसरूप है, वही निरञ्जनरूप है, वही निर्मल (कर्ममलरहित) स्वरूपका धारक है, वही स्वसंवेदन ज्ञान है वही परमतत्त्वज्ञान है, वही शुद्धात्माका दर्शन है, वही परम (उत्कृष्ट) अवस्थास्वरूप है वही परमात्माका दर्शन है, वही परम तत्त्वज्ञान है, वही शुद्धात्मज्ञान है, वही ध्यान करनेयोग्य जो शुद्ध पारिणामिकभाव है उस रूप है, वही ध्यानभावस्वरूप है वही शुद्ध चारित्र है, वही अन्तरंगका तत्त्व है, वही परम ( उत्कृष्ट ) तत्त्व है, वही शुद्ध आत्मा द्रव्य है, वही परम ज्योतिः ( ज्ञान ) है, वही शुद्ध आत्माकी अनुभूति है, वही आत्मा द्रव्य है, वही आत्माकी प्रतीति है, वही आत्माकी संवित्ति अर्थात् साक्षात्कार है, वही निजआत्मस्वरूपकी प्राप्ति है, वही नित्य पदार्थकी प्राप्ति है, वही परम समाधि है, वही परम आनंद है, वही नित्य आनन्द है, वही स्वभावसे उत्पन्न हुआ आनन्द है, वही सदानन्द है, वही शुद्ध आत्मपदार्थके पठनरूप स्वरूपका धारक है वही परम स्वाध्याय है, वही निश्चय मोक्षका उपाय है, वही एकाग्रचिंताओंका निरोध है, वही परमज्ञान है, वही शुद्ध उपयोग है, वही परम योग है, वही भूतार्थ है, वही परमार्थ है, वही निश्चयनयके अनुसार जो ज्ञान, दर्शन, चारित्र, तप और वीर्यरूप पांच प्रकारका आचार है उस स्वरूप है, वही समयसार है, वही अध्यात्मसार है, वही समता आदिरूप जो निश्चयनयसे ६ आवश्यक हैं उन स्वरूप है, वही अभेद रत्नत्रयरूप है, वही वीतराग सामायिक है, वही परमशरणोत्तम मंगल है, वही केवल ज्ञानोत्पत्तिका

सैव परमात्मभावना, सैव शुद्धात्मभावनोत्पन्नसुखानुभूतिरूपपरमकला, सैव दिव्यकला, तदेव परमाद्वैतं, तदेव परमामृतपरमधर्मध्यानं, तदेव शुक्लध्यानं, तदेव रागादिविकल्प-शून्यध्यानं, तदेव निष्कलध्यानं तदेव परमस्वास्थ्यं, तदेव परमवीतरागत्वं, तदेव परम-साम्यं, तदेव परमैकत्वं, तदेव परमभेदज्ञानं, स एव परमसमरसीभावः, इत्यादिसमस्तरागादिविकल्पोपाधिरहितपरमाल्हादैकसुखलक्षणध्यानरूपस्य निश्चयमोक्षमार्गस्य वाचकान्यन्यान्यपि पर्यायनामानि विज्ञेयानि भवन्ति परमात्मतत्त्वविद्भिरिति ॥ ५६ ॥

अतः परं यद्यपि पूर्वं बहुधा भणितं ध्यातृपुरुषलक्षणं ध्यानसामग्री च तथापि चूलिकोपसंहाररूपेण पुनरप्याख्याति;—

तवसुदवदवं चेदा झाणरहधुरंधरो हवे जम्हा ।
तम्हा तत्तियणिरदा तल्लद्धीए सदा होह ॥ ५७ ॥

व्याख्या । 'तवसुदवदवं चेदा ज्झाणरहधुरंधरो हवे जम्हा' तपश्रुतव्रतवानात्मा चेतयिता ध्यानरथस्य धुरन्धरो समर्थो भवति 'जम्हा' यस्मात् 'तम्हा तत्तियणिरदा तल्लद्धीए

---

कारण है, वही समस्त कर्मोंके नाशका कारण है, वही निश्चयनयकी अपेक्षासे जो दर्शन, ज्ञान, चारित्र और तपभेदोंसे चार प्रकारकी आराधना है उस स्वरूप है, वही परमात्माकी भावनारूप है, वही शुद्धात्माकी भावनासे उत्पन्न जो सुख उसकी अनुभूति-रूप परमकला है, वही दिव्य कला है, वही परम अद्वैत है, वही अमृतस्वरूप परम धर्मध्यान है, वही शुक्लध्यान है, वही राग आदि विकल्पोंरहित ध्यान है, वही निष्कल ध्यान है वही परम स्वास्थ्य है, वही परम वीतरागतारूप है, वही परम समतास्वरूप है, वही परम एकत्व है, वही परम भेदज्ञान है, वही परम समरसीभाव है। इनको आदि ले, संपूर्ण राग आदि विकल्पोंको उपाधिसे रहित और परम आल्हादकसुखरूप लक्षणका धारक जो ध्यान है उस स्वरूप जो निश्चय मोक्षमार्ग है उसको कहनेवाले अन्य भी बहुतसे जीवपर्यायी नाम परमात्मतत्त्वको अर्थात् परमात्माके स्वरूपको जाननेवाले जो भव्य जीव हैं उनको जान लेने चाहिये ॥ ५६ ॥

अब इसके आगे यद्यपि पहले ध्यान करनेवाले पुरुषका लक्षण और ध्यानकी साम-ग्रीका कई प्रकारसे वर्णन कर चुके हैं; तोभी चूलिका और उपसंहाररूपसे फिर भी ध्याता पुरुष और ध्यानसामग्रीका कथन करते हैं;—

**गाथाभावार्थः**—क्योंकि, तप, श्रुत और व्रतका धारक जो आत्मा है वही ध्यान-रूपी रथकी धुराको धारण करनेवाला होता है। इस कारण हे भव्यजनो! तुम उस ध्यानकी प्राप्तिके अर्थ निरन्तर तप, श्रुत और व्रत इन तीनोंमें तत्पर होवो ॥ ५७ ॥

**व्याख्यार्थः**—"तवसुदवदवं चेदा ज्झाणरयधुरंधरो हवे जम्हा" जिस कारणसे कि तप, श्रुत और व्रतका धारक आत्मा ध्यानरूपी रथकी धुराको धारण करनेसे लिये समर्थ होता है। "तम्हा तत्तियणिरदा तल्लद्धीए सदा होह" इस कारणसे हे भव्यो!

सदा होइ' तस्मात् कारणात् तपश्रुतव्रतानां संबन्धेन यत्त्रितयं तत् त्रितये रता सर्वकाले भवत हे भव्याः 'किमर्थं ? तस्य ध्यानस्य लब्धिस्तल्लब्धिस्तदर्थमिति। तथाहि-अनशनावमौदर्यवृत्तिपरिसंख्यानरसपरित्यागविविक्तशय्यासनकायक्लेशभेदेन बाह्यं षड्विधं, तथैव प्रायश्चित्तविनयवैय्यावृत्यस्वाध्यायव्युत्सर्गध्यानभेदेनाऽभ्यन्तरमपि षड्विधं चेति द्वादशविधं तपः। तेनैव साध्यं शुद्धात्मस्वरूपे प्रतपनं विजयनं निश्चयतपश्च। तथैवाचाराराधनादिद्रव्यश्रुतं, तदाधारेणोत्पन्नं निर्विकारस्वसंवेदनज्ञानरूपं भावश्रुतं च। तथैव च हिंसानृतस्तेयाब्रह्मपरिग्रहाणां द्रव्यभावरूपाणां परिहरणं व्रतपञ्चकं चेति। एवमुक्तलक्षणतपःश्रुतव्रतसहितो ध्याता पुरुषो भवति। एयमेव ध्यानसामग्री चेति। तथाचोक्तं—"वैराग्यं तत्त्वविज्ञानं नैर्ग्रन्थ्यं [1]समचित्तता। परीषहजयश्चेति पञ्चैते ध्यानहेतवः। १।

---

उस ध्यानकी प्राप्तिके अर्थ तप श्रुत और व्रतोंके संबंधसे जो त्रितय है उस त्रितयमें अर्थात् तपः श्रुत तथा व्रत इन तीनोंके समुदायमें सर्वकाल ( निरन्तर ) तत्पर होवो। अब इसीका विशेष वर्णन करते हैं कि-अनशन ( उपवासका करना ) १, अवमौदर्य्य ( कम भोजन करना ) २, वृत्तिपरिसंख्यान ( अटपटी वृत्तिको ग्रहण करके भोजन करने जाना ) ३, रसपरित्याग ( छः रसोंमेंसे एक दो आदि रसोंका त्याग करना ) ४, विवक्तशय्यासन ( निर्जन और शुद्ध स्थलमें शयन करना वा बैठना ) ५, कायक्लेश (शक्तिके अनुसार शरीरसे परिश्रम लेना ) ६, इन भेदोंसे छः प्रकारका बाह्य तप और इसी प्रकार प्रायश्चित्त १, विनय २, वैयावृत्य ३, स्वाध्याय ४, कायोत्सर्ग ५ और ध्यान ६, इन भेदोंसे छः प्रकारका अन्तरंग तप ऐसे बाह्य तथा अभ्यन्तर दोनों तपोंके भेदोंको मिलानेसे बारह प्रकारका व्यवहारतप है। और उसी व्यवहारतपसे सिद्ध होने योग्य निज शुद्ध आत्माके स्वरूपमें प्रतपन अर्थात् विजय करने रूप निश्चयतप है। इसी प्रकार मूलाचार भगवती आराधना आदि द्रव्यश्रुत, तथा उन शास्त्रोंके आधारसे अर्थात् पठन पाठनसे उत्पन्न हुआ और विकाररहित निज शुद्ध आत्माके जाननेरूप ज्ञानका धारक भावश्रुत है। तथा इसीप्रकार द्रव्य और भावरूप जो हिंसा, अनृत ( झूठ ), स्तेय ( चोरी ), अब्रह्म ( कुशील ) और परिग्रह है, इनके त्यागरूप पांचव्रत हैं। ऐसे कहे हुए लक्षणके धारक जो तप, श्रुत और व्रत हैं इनसे सहित हुआ पुरुष ध्याता ( ध्यानकरनेवाला ) होता है। और इन तप, श्रुत तथा व्रतरूप ही ध्यानकी सामग्री है। सो ही कहा कि "वैराग्य १, तत्त्वों का ज्ञान २, बाह्य अभ्यन्तर रूप दोनों परिग्रहोंसे रहितपना ३, राग और द्वेषकी रहिततारूप साम्यभावका होना ४, और बाईस परिषहोंका जीतना ५, ये पांचों ध्यानके कारण हैं। १।"

---

१-'वशचित्तता' इत्यपि पाठः।

भगवन् ध्यानं तावन्मोक्षमार्गभूतम् । मोक्षार्थिना पुरुषेण पुण्यबन्धकारणत्वाद्व्रतानि त्याज्यानि भवन्ति, भवद्भिः पुनर्ध्यानसामग्रीकारणानि तपःश्रुतव्रतानि व्याख्यातानि, तत् कथं घटत इति । तत्रोत्तरं दीयते-व्रतान्येव केवलानि त्याज्यान्येवं न किन्तु पापबन्धकारणानि हिंसादिविकल्परूपाणि यान्यव्रतानि तान्यपि त्याज्यानि । तथाचोक्तं पूज्यपादस्वामिभिः—"अपुण्यमव्रतैः पुण्यं व्रतैर्मोक्षस्तयोर्व्ययः । अव्रतानीव मोक्षार्थी व्रतान्यपि ततस्त्यजेत् ॥ १ ॥ किंत्वव्रतानि पूर्वं परित्यज्य ततश्च व्रतेषु तन्निष्ठो भूत्वा निर्विकल्पसमाधिरूपं परमात्मपदं प्राप्य पश्चादेकदेशव्रतान्यपि त्यजति । तदप्युक्तं तैरेव—'अव्रतानि परित्यज्य व्रतेषु परिनिष्ठितः । त्यजेत्तान्यपि संप्राप्य परमं पदमात्मनः । १ ।"

अयं तु विशेषः-व्यवहाररूपाणि यानि प्रसिद्धान्येकदेशव्रतानि तानि त्यक्तानि । यानि पुनः सर्वशुभाशुभनिवृत्तिरूपाणि निश्चयव्रतानि तानि त्रिगुप्तिलक्षणस्वशुद्धात्मसम्वित्तिरूप-निर्विकल्पध्याने स्वीकृतान्येव न च त्यक्तानि । प्रसिद्धमहाव्रतानि कथमेकदेशरूपाणि जातानि । इति चेत्तदुच्यते—जीवघातनिवृत्तौ सत्यामपि जीवरक्षणे प्रवृत्तिरस्ति । तथै-

---

यहां शिष्य शंका करता है कि, आचार्यभगवान् ! ध्यान तो मोक्षका मार्गभूत है अर्थात् मोक्षका कारण है और जो मोक्षको चाहनेवाला पुरुष है उसको पुण्यबंधके कारण होनेसे व्रत त्यागने योग्य हैं अर्थात् व्रतोंसे पुण्यका बन्ध होता है; और पुण्यबन्ध संसारका कारण है; इसलिये मोक्षार्थी व्रतोंका त्याग करता है और आपने तप, श्रुत और व्रतोंको ध्यानकी पूर्णताके कारण कहे सो यह आपका कथन कैसे घटता ( सिद्ध होता ) है ? अब इस शंकाका उत्तर दिया जाता है कि, केवल व्रत ही त्यागने योग्य हैं ऐसा नहीं किंतु पापबंधके कारण जो हिंसा आदि भेदोंके धारक अव्रत हैं वे भी त्यागने योग्य हैं । सो ही श्रीपूज्यपादस्वामीने कहा है कि, "हिंसा आदि अव्रतोंसे पापका बन्ध होता है; और अहिंसादि व्रतोंसे पुण्यका बन्ध होता है; तथा मोक्ष जो है वह पाप व पुण्य इन दोनोंके नाशसे होता है; इस कारण मोक्षको चाहनेवाला पुरुष जैसे अव्रतोंका त्याग करता है, वैसे ही अहिंसादिव्रतोंका भी त्याग करै । १ ।" विशेष यह है कि मोक्षार्थी पुरुष पहले अव्रतोंका त्याग करके पश्चात् व्रतोंका धारक होकर निर्विकल्प—समाधि (ध्यान) रूप आत्माके परम पदको प्राप्त होकर तदनन्तर एकदेशव्रतोंका भी त्याग कर देता है । यह भी उन्हीं श्रीपूज्यपादस्वामीने समाधिशतकमें कहा है कि "मोक्षको चाहनेवाला पुरुष अव्रतोंका त्याग करके व्रतोंमें स्थित होकर आत्माके परम पदको पावै और उस आत्माके परम पदको प्राप्त होकर उन व्रतोंका भी त्याग करै । १ ।"

इस पूर्वकथनमें विशेष यह है कि, मन वचन और कायकी गुप्तिरूप और निज शुद्ध आत्माके ज्ञानस्वरूप जो निर्विकल्पध्यान है उसमें व्यवहाररूप जो प्रसिद्ध एकदेशव्रत हैं उनका त्याग किया है । और जो संपूर्ण शुभ तथा अशुभ की निवृत्तिरूप निश्चयव्रत

वासत्यवचनपरिहारेऽपि सत्यवचनप्रवृत्तिरस्ति। तथैव चादत्तादानपरिहारेऽपि दत्तादाने प्रवृत्तिरस्तीत्याद्येकदेशप्रवृत्त्यपेक्षया देशव्रतानि तेषामेकदेशव्रतानां त्रिगुप्तिलक्षणनिर्विकल्पसमाधिकाले त्यागः। न च समस्तशुभाशुभनिवृत्तिलक्षणस्य निश्चयव्रतस्येति। त्यागः कोऽर्थः। यथैव हिंसादिरूपाव्रतेषु निवृत्तिस्तथैकदेशव्रतेष्वपि। कस्मादिति चेत्—त्रिगुप्तावस्थायां प्रवृत्तिनिवृत्तिरूपविकल्पस्य स्वयमेवावकाशो नास्ति। अथवा वस्तुतस्तदेव निश्चयव्रतम्। कस्मात्—सर्वनिवृत्तित्वादिति। योऽपि घटिकाद्वयेन मोक्षं गतो भरतश्चक्री सोऽपि जिनदीक्षां गृहीत्वा विषयकषायनिवृत्तिरूपं क्षणमात्रं व्रतपरिणामं कृत्वा पश्चाच्छुद्धोपयोगत्वरूपरत्नत्रयात्मके निश्चयव्रताभिधाने वीतरागसामायिकसंज्ञे निर्विकल्पसमाधौ स्थित्वा केवलज्ञानं लब्धवानिति। परं किन्तु तस्य स्तोककालत्वाल्लोका व्रतपरिणामं न जानन्तीति। तदेव भरतस्य दीक्षाविधानं कथ्यते। हे भगवन् जिनदीक्षादानानन्तरं

---

हैं उनका स्वीकार ही किया गया है और त्याग नहीं किया गया है। प्रसिद्ध जो अहिंसादि महाव्रत हैं वे एकदेशरूप कैसे हो गये? ऐसी शंका करो तो समाधानरूप उत्तर यह है कि, अहिंसा महाव्रतमें यद्यपि जीवोंके घात (मारने) से निवृत्ति (रहितता) है; तथापि जीवोंकी रक्षा करनेमें प्रवृत्ति है। इसी प्रकार सत्य महाव्रतमें यद्यपि असत्य वचनका त्याग है, तो भी सत्यवचनमें प्रवृत्ति है। और अचौर्यमहाव्रतमें यद्यपि नहीं दिये हुए पदार्थके ग्रहण करनेका त्याग है, तो भी दिये हुए पदार्थके ग्रहण करनेमें प्रवृत्ति है। इत्यादि एकदेशप्रवृत्तिकी अपेक्षासे ये पांचों महाव्रत देशव्रत हैं। इन एकदेशरूप व्रतोंका मन, वचन और कायकी गुप्ति स्वरूप जो विकल्परहित ध्यान है उसके समयमें त्याग है। और समस्त शुभ तथा अशुभको निवृत्तिरूप जो निश्चयव्रत है उसका त्याग नहीं है। प्रश्न—त्याग इस शब्दका क्या अर्थ है? उत्तर—जैसे हिंसा आदि रूप पांच अव्रतोंमें रहितपना है उसी प्रकार जो अहिंसा आदि पंचमहाव्रतरूप एकदेश व्रत हैं उनमें रहितपना है, यही यहां त्याग शब्दका अर्थ है इन एकदेशव्रतोंका त्याग किस कारणसे होता है? ऐसा पूछो तो उत्तर यह है कि, मन, वचन और काय इन तीनोंकी गुप्तिरूप जो अवस्था है; उसमें प्रवृत्ति तथा निवृत्तिरूप जो विकल्प है; उसका स्वयं ही अवकाश नहीं है, अर्थात् मन, वचन और कायकी गुप्तिरूप ध्यानमें कोई प्रकारका भी विकल्प नहीं होता और अहिंसादि महाव्रत विकल्परूप हैं इसलिये वे त्रिगुप्तिमें ध्यानरूप नहीं रह सकते हैं। और जो दीक्षाके पश्चात् दो घटिका (घडी) प्रमाणकालमें ही श्रीभरतचक्रवर्ती मोक्ष पधारे हैं उन्होंने भी जिनदीक्षाको ग्रहण करके, क्षणमात्र (थोड़े समयतक) विषय और कषायोंकी रहिततारूप जो व्रतका परिणाम है उसको करके तत्पश्चात् शुद्धोपयोगरूप जो रत्नत्रय उस स्वरूप जो निश्चयव्रत नामका धारक और वीतरागसामायिक नामका धारक निर्विकल्प ध्यान है उसमें स्थित होकर केवलज्ञानको प्राप्त हुए हैं। परन्तु श्रीभरतजीके जो थोड़े समय व्रतपरिणाम रहा इस

भरतचक्रिणः कियति काले केवलज्ञानं जातमिति श्रीवीरवर्द्धमानस्वामितीर्थंकरपरमदेव-समवसरणमध्ये श्रेणिकमहाराजेन पृष्टे सति गौतमस्वामी आह—"पञ्चमुष्टिभिरुत्पाट्य त्रोट्यन् बन्धस्थितीन् कचान्। लोचानन्तरमेवापद्राजन् श्रेणिक केवलम्। १।"

अत्राह शिष्यः। अद्य काले ध्यानं नास्ति। कस्मादिति चेत्—उत्तमसंहननाभावाद्-दशचतुर्दशपूर्वगतश्रुतज्ञानाभावाच्च। अत्र परिहारः। शुक्लध्यानं नास्ति धर्मध्यानमस्तीति। तथा चोक्तं मोक्षप्राभृते श्रीकुन्दकुन्दाचार्यदेवैः "भरहे दुस्समकाले धम्मज्झाणं हवेइ णाणिस्स। तं अप्पसहावठिए ण हु मण्णइ सो दु अण्णाणी। १। अज्जवि तियरणसुद्धा अप्पा ज्झाऊण लहइ इंदत्तं। लोयंतियदेवत्तं तत्थचुदा णिव्वुदिं जंति। २।" तथैव तत्त्वानुशासनग्रन्थे चोक्तं "अत्रेदानीं निषेधन्ति शुक्लध्यानं जिनोत्तमाः। धर्मध्यानं पुनः प्राहुः श्रेणीभ्यां प्राग्विवर्त्तिनाम्। १।" यथोक्तमुत्तमसंहननाभावात्तदुत्सर्गवचनम्।—

---

कारण लोग श्रीभरतजीके व्रतपरिणामको नहीं जानते हैं। अब उसी श्रीभरतजीकी दीक्षाके विधानका कथन करते हैं। श्री वीर वर्द्धमानस्वामी तीर्थंकर परमदेवके समवसरणमें श्रेणिक महाराजने प्रश्न किया कि 'हे भगवन्! श्रीभरतचक्रवर्तीके जिनदीक्षाको ग्रहण करनेके पीछे कितने कालमें केवलज्ञान उत्पन्न हुआ' इस पर श्रीगौतमस्वामी गणधरदेवने उत्तर दिया कि "हे श्रेणिक राजन्! बन्धके कारणभूत जो केश (बाल) हैं उनको पांच मुष्टियोंसे उखाड़कर तोड़ते हुए ही अर्थात् पंचमुष्टी लोच करनेके अनन्तर ही श्री भरतचक्रवर्ती केवलज्ञानको प्राप्त हुए। १।"

अब यहांपर शिष्य कहता है कि, भो गुरो! इस पंचम कालमें ध्यान नहीं है। क्यों नहीं है? इस प्रश्नका उत्तर यह है कि इस कालमें उत्तमसंहननका अर्थात् वज्र, वृषभ और नाराच संहननोंका अभाव है और दश तथा चौदहपूर्व पर्यन्त श्रुतज्ञानका अभाव है। अब आचार्य महाराज इस शिष्यकी शंकाको दूर करते हैं कि, हे शिष्य! इस समयमें शुक्लध्यान नहीं है परंतु धर्मध्यान तो है ही है। सो ही श्रीकुन्दकुन्द आचार्यस्वामी मोक्ष-प्राभृत (मोक्षपाहुड)में कहते हैं कि, "भरतक्षेत्रमें जो दुःषमा अर्थात् पंचमकाल है उसमें ज्ञानी जीवके धर्मध्यान होता है। उसको जो कोई आत्माके स्वभावमें स्थित नहीं मानता है वह अज्ञानी है। १। क्योंकि इस समय भी जो सम्यग्दर्शन, सम्यग्ज्ञान और सम्यक्चारित्ररूप रत्नत्रय है उससे शुद्ध हुए जीव आत्माका ध्यान करके इन्द्रप-नेको अथवा लौकान्तिकदेवपनेको प्राप्त होते हैं। और वहांसे चयकर नरपर्यायको ग्रहण करके उसी भवमें मोक्षको जाते हैं। २।" और इसीप्रकार तत्त्वानुशासन नामक ग्रन्थमें भी कहा है कि, "इस समय (पंचमकाल)में श्रीजिनेन्द्रदेव शुक्लध्यानका निषेध करते हैं; अर्थात् इस समयमें शुक्लध्यान नहीं होता ऐसा उपदेश देते हैं; और उपशम-श्रेणी तथा क्षपकश्रेणी इन दोनों श्रेणियोंसे पहले रहनेवाले जीवोंके धर्मध्यान होता है ऐसा कथन करते हैं। १।" और हे शिष्य! तुमने जो यह कहा कि 'इस कालमें उत्तम

अपवादव्याख्यानेन पुनरुपशमक्षपकश्रेण्योः शुक्लध्यानं भवति, तच्चोत्तमसंहननेनैव। अपूर्वगुणस्थानादधस्तनेषु गुणस्थानेषु धर्मध्यानं, तच्चादिमत्रिकोत्तमसंहननाभावेऽप्यन्तिमत्रिकसंहननेनापि भवति। तदप्युक्तं तत्रैव तत्त्वानुशासने "यत्पुनर्वज्रकायस्य ध्यानमित्यागमे वचः। श्रेण्योर्ध्यानं प्रतीत्योक्तं तन्नोऽधस्तान्निषेधकम्। १। यथोक्तं दशचतुर्दशपूर्वगतश्रुतज्ञानेन ध्यानं भवति तदप्युत्सर्गवचनम्। अपवादव्याख्यानेन पुनः पञ्चसमितित्रिगुप्तिप्रतिपादकसारभूतश्रुतेनापि ध्यानं भवति केवलज्ञानञ्च। यद्येवमपवादव्याख्यानं नास्ति तर्हि "तुसमासं घोसन्तो सिवभूदी केवली जादो" इत्यादिगन्धर्वाराधनादिभणितं व्याख्यानं कथं घटते ?

अथ मतं-पञ्चसमितित्रिगुप्तिप्रतिपादकं द्रव्यश्रुतमिति जानाति। इदं भावश्रुतं पुनः सर्वमस्ति। नैवं वक्तव्यम्। यदि पञ्चसमितित्रिगुप्तिप्रतिपादकं द्रव्यश्रुतं जानाति तर्हि 'मा रूसह मा तूसह' इत्येकं पदं किं न जानाति ? तत एव ज्ञायतेऽष्टप्रवचनमातृप्रमाणमेव भावश्रुतं, द्रव्यश्रुतं पुनः किमपि नास्ति। इदन्तु व्याख्यानमस्माभिर्न कल्पितमेव।

---

संहननका अभाव है इस कारण ध्यान नहीं होता' सो यह उत्सर्गवचन है। अपवादरूप व्याख्यानसे तो उपशमश्रेणी तथा क्षपकश्रेणीमें शुक्लध्यान होता है और वह उत्तमसंहनन से ही होता है। और अपूर्वकरण नामक ८ वें गुणस्थानसे नीचेके जो गुणस्थान हैं उनमें धर्मध्यान होता है। और वह धर्मध्यान वज्र १, वृषभ २, नाराच ३, इन आदिके तीन उत्तम संहननोंका अभाव होनेपर अन्तके जो अर्द्धनाराच १, कीलक २ और स्फाटिक ३ नामक तीन संहनन हैं उनसे भी होता है। यह विषय भी उसी तत्त्वानुशासन नामक ग्रन्थमें कहा है कि, "और जो वज्र काय (संहनन) के धारकके ध्यान होता है" ऐसा आगममें वचन है वह उपशम तथा क्षपक श्रेणीके ध्यानको प्रतीतिगोचर करके कहा है, इस कारण यह वचन नीचेके गुणस्थानोंमें धर्मध्यानका निषेध करनेवाला नहीं है। तथा जो ऐसा कहा है कि 'दश तथा चौदहपूर्व गत श्रुतज्ञानसे ध्यान होता है' वह भी उत्सर्गका वचन है। और अपवादके व्याख्यानसे तो पांच समिति और तीन गुप्तिको प्रतिपादन करनेवाला सारभूत श्रुतज्ञान है उससे भी ध्यान और केवलज्ञान होता है। जो ऐसा अपवाद व्याख्यान न हो तो "तुष माषका उच्चारण (अभ्यास) करते हुए श्रीशिवभूति मुनि केवलज्ञानी होगये" इत्यादि गंधर्वाराधनादि ग्रंथोंमें कहा हुआ कथन कैसे सिद्ध होवे ?

अब कदाचित् ऐसा मत हो कि, शिवभूति मुनि पांच समिति और तीन गुप्तियोंको प्रतिपादन करनेवाले द्रव्यश्रुत (शास्त्र) को जानते थे और यह भावश्रुत उनके संपूर्ण रूपसे था, सो ठीक नहीं। क्योंकि, यदि शिवभूतिमुनि पांच समिति और तीन गुप्तियोंका कथन करनेवाले द्रव्यश्रुत (शास्त्र) को जानते थे तो उन्होंने "मा तूसह मा रूसह" अर्थात् किसीमें राग और द्वेष मत कर इस एक पदको क्यों नहीं जाना ? इसी कारणसे

तच्चारित्रसारादिग्रन्थेष्वपि भणितमास्ते। तथाहि—अन्तर्मुहूर्त्तादूर्ध्वं ये केवलज्ञानमुत्पादयन्ति ते क्षीणकषायगुणस्थानवर्त्तिनो निर्ग्रन्थसंज्ञा ऋषयो भण्यन्ते। तेषां चोत्कर्षेण चतुर्दशपूर्वादिश्रुतं भवति, जघन्येन पुनः पञ्चसमितित्रिगुप्तिमात्रमेवेति।

अथ मतं—मोक्षार्थं ध्यानं क्रियते न चाद्य काले मोक्षोऽस्ति; ध्यानेन किं प्रयोजनम्? नैवं—अद्य कालेऽपि परम्परया मोक्षोऽस्ति। कथमिति चेत्, स्वशुद्धात्मभावनाबलेन संसारस्थितिं स्तोकां कृत्वा देवलोकं गच्छति, तस्मादागत्य मनुष्यभवे रत्नत्रयभावनां लब्ध्वा शीघ्रं मोक्षं गच्छतीति। येऽपि भरतसगररामपाण्डवादयो मोक्षं गतास्तेपि पूर्वभवेऽभेदरत्नत्रयभावनया संसारस्थितिं स्तोकां कृत्वा पश्चान्मोक्षं गताः। तद्भवे सर्वेषां मोक्षो भवतीति नियमो नास्ति। एवमुक्तप्रकारेण अल्पश्रुतेनापि ध्यानं भवतीति ज्ञात्वा किं कर्त्तव्यम्—"वधबन्धच्छेदादेर्द्वेषाद्रागाच्च परकलत्रादेः। आध्यानमपध्यानं शासति जिनशासने विशदाः। १। संकल्पकल्पतरुसंश्रयणात्त्वदीयं चेतो निमज्जति मनोरथसागरेऽस्मिन्।

---

जाना जाता है कि पांच समिति और तीन गुप्तियों रूप जो आठ प्रवचन मातायें हैं उन प्रमाण ही उनके भावश्रुत था और द्रव्यश्रुत कुछ भी नहीं था। और यह व्याख्यान हमने ही नहीं कल्पित किया है; किंतु 'चारित्रसार' आदि शास्त्रोंमें भी यह वर्णन किया हुआ है। सो ही दिखलाते हैं-अन्तर्मुहूर्त्तके पीछे जो केवलज्ञानको उत्पन्न करते हैं वे क्षीणकषाय नामक १२ वें गुणस्थानमें रहने वाले निर्ग्रन्थ संज्ञाके धारक ऋषी कहलाते हैं, और उनके उत्कृष्टतासे ग्यारह अंग चौदह पूर्वपर्यन्त श्रुतज्ञान होता है, और जघन्यरीतिसे पांच समिति तथा तीन गुप्तियों मात्र ही श्रुतज्ञान होता है।

अब कदाचित् तुम्हारा यह मत हो कि,—मोक्षके लिये ध्यान किया जाता है और मोक्ष इस पंचम कालमें होता नहीं है इस कारण ध्यानके करनेसे क्या प्रयोजन है। सो यह सिद्धान्त भी ठीक नहीं। क्योंकि, इस पंचमकालमें भी परंपरासे मोक्ष है। परंपरासे मोक्ष कैसे है? ऐसा पूछा तो उत्तर यह है कि; ध्यानी पुरुष निजशुद्ध आत्माकी भावनाके बलसे संसारकी स्थितिको अल्प करके अर्थात् बहुतसे कर्मोंकी निर्जरा करके स्वर्गमें जाता है। और वहांसे मनुष्यभवमें आकर रत्नत्रयकी भावनाको प्राप्त होकर शीघ्र ही मोक्षको चला जाता है और जो भरतचक्रवर्त्ती, सगरचक्रवर्त्ती, रामचंद्रजी तथा पांडव अर्थात् युधिष्ठिर, अर्जुन और भीम आदि मोक्षको गये हैं; उन्होंने भी पूर्वभवमें अभेदरत्नत्रयकी भावनासे अपने संसारकी स्थितिको घटाली थी; इस कारण इस भवमें मोक्ष गये। उसी भवमें सबके मोक्ष हो जाता है ऐसा नियम नहीं है। ऐसे कहे हुये प्रकारसे अल्पश्रुतज्ञानसे भी ध्यान होता है। यह जानकर क्या करना चाहिये? "द्वेषसे वध (मारना) वन्ध (बांधना) छेद (किसी अंगको काटना) आदिका और रागसे परस्त्री आदिका जो चिंतवन करना है; उसको जिनमतमें निर्मल बुद्धिके धारक आचार्य अपध्यान (बुरा ध्यान) कहते हैं। १। हे जीव संकल्परूपी कल्पवृक्षका आश्रय करनेसे तेरा चित्त इस

तत्राथतस्तव चकास्ति न किं च नापि पक्षे परं भवति कल्मषसंश्रयस्य ।२। दौर्विध्यदग्ध-मनसोऽन्तरुपात्तभुक्तेश्चित्तं यथोल्लसति ते स्फुरितोत्तरङ्गम् । धाम्नि स्फुरेद्यदि तथा परमात्मसंज्ञे कौतस्कुती तव भवेद्विफला प्रसूतिः ।३। कंखिद कलुसिदभूतो कामभोगेहि मुच्छिदो जीवो । ण य भुञ्जंतो भोगे वन्धदि भावेण कम्माणि ।४।" इत्याद्यपध्यानं त्यक्त्वा—ममत्तिं परिवज्जामि णिममत्तिमुवट्ठिदो । आलंवणं च मे आदा अवसेसाइं वोसरे ।१। आदा क्खु मज्झ णाणे आदा मे दंसणे चरित्ते य। आदा पच्चक्खाणे आदा मे संवरे जोगे ।२। एगो मे सस्सदो अप्पा णाणदंसणलक्खणो । सेसा मे बाहिरा भावा सव्वे संजोगलक्खणा ।३। इत्यादिसारपदानि गृहीत्वा च ध्यानं कर्त्तव्यमिति ।

अथ मोक्षविषये पुनरपि नयविचारः कथ्यते । तथाहि मोक्षस्तावत् बन्धपूर्वकः ॥ तथाचोक्तं-"मुक्तश्चेत् प्राक्भवेद्बन्धो नो बन्धो मोचनं कथम् । अबन्धे मोचनं नैव मुञ्चेरर्थो

---

मनोरथ सागरमें डूब जाता है; और उस संकल्परूपी कल्पवृक्षका आश्रय करनेमें यद्यपि इष्टपदार्थका अनुभव होता है परन्तु परमार्थसे तुझको कुछ भी नहीं भासता है; केवल निश्चयसे तू पापका भागी होता है ।२। निर्धनतासे दग्ध है मन जिसका ऐसा और संकल्पसे ग्रहण किया है भोजन जिसने ऐसा तेरा उत्कट मनोरथोंका धारक चित्त जैसे भोजनको लेनेके लिये प्रवृत्त होता है; वैसे ही यदि तू परमात्मा नामके धारक तेजमें वा स्थानमें चित्तको करै तो तेरा जन्म कैसे निष्फल हो अर्थात् तेरा जन्म लेना सफल हो जावै। ३। कषायोंसे मलीन हुआ और कामभोगोंमें मूर्च्छित हुआ यह जीव कामभोगों की इच्छा करता है। और भोगोंको भोगता नहीं है तो भी भावोंसे कर्मोंको बांधता है ।४।" इत्यादि रूप जो दुर्ध्यान है उसको छोड़कर और "निर्ममत्त्वमें स्थित होकर पर पदार्थोंमें जो ममकार ( मेरी ) बुद्धि है उसका मैं त्याग करता हूं; और मेरे आत्मा ही आलंबन ( ध्यानका आधार ) है; अन्य सबको मैं त्यागता हूं किंवा भूलता हूं। १। मेरे आत्मा ही दर्शन है, आत्मा ही ज्ञान है, आत्मा ही चारित्र है, आत्मा ही प्रत्याख्यान है, आत्मा ही संवरका कारण है और आत्मा ही योग है। २। मेरा ज्ञान-दर्शनरूप लक्षणका धारक एक आत्मा ही अविनाशी है, और बाकीके सब संयोगरूप लक्षणके धारक बाह्यभाव हैं उनका वियोग अवश्य होगा । ३।" इत्यादि सारभूत २ पदोंको ग्रहण करके ध्यान करना चाहिये ।

अब मोक्षके विषयमें फिर भी नयोंके विचारका कथन करते हैं। सो ही दिखलाते हैं कि, मोक्ष जो है वह बन्धपूर्वक है अर्थात् जिसके पहले बंध होता है उसीके मोक्ष होता है । सो ही कहा है कि, 'जो यदि यह जीव मुक्त है तो पहले इस जीवके बंध अवश्य होना चाहिये। यदि कहो कि जीवके पहले बन्ध नहीं था तो जीवके मोचन ( छूटना ) कैसे हुआ ? क्योंकि बिना बंधे हुए जीवके मोचन नहीं हो सकता । इस लिये बन्धको

निरर्थकः । १ ।" बन्धश्च शुद्धनिश्चयनयेन नास्ति । तथा बन्धपूर्वको मोक्षोऽपि । यदि पुनः शुद्धनिश्चयेन बन्धो भवति तदा सर्वदैव बन्ध एव मोक्षो नास्ति । किंच—यथा शृङ्खलाबद्धपुरुषस्य बन्धच्छेदकारणभूतभावमोक्षस्थानीयं बन्धच्छेदकारणभूतं पौरुषं पुरुषस्वरूपं न भवति, तथैव शृङ्खलापुरुषयोर्यद्द्रव्यमोक्षस्थानीयं पृथक्करणं तदपि पुरुषस्वरूपं न भवति । किन्तु ताभ्यां भिन्नं यद्दृष्टं हस्तपादादिरूपं तदेव पुरुषस्वरूपम् । तथैव शुद्धोपयोगलक्षणं भावमोक्षस्वरूपं शुद्धनिश्चयेन जीवस्वरूपं न भवति, तथैव तेन साध्यं यज्जीवकर्मप्रदेशयोः पृथक्करणं द्रव्यमोक्षरूपं तदपि जीवस्वभावो न भवति । किन्तु ताभ्यां भिन्नं यदनन्तज्ञानादिगुणस्वभावं फलभूतं तदेव शुद्धजीवस्वरूपमिति । अयमत्रार्थः—यथा विवक्षितैकदेशशुद्धनिश्चयेन पूर्वं मोक्षमार्गो व्याख्यातस्तथा पर्यायमोक्षरूपो मोक्षोऽपि । न च शुद्धनिश्चयनयेनेति । यस्तु शुद्धद्रव्यशक्तिरूपः शुद्धपारिणामिकपरमभावलक्षणपरमनिश्चयमोक्षः स च पूर्वमेव जीवे तिष्ठतीदानीं भविष्यतीत्येवं न । स एव रागादिविकल्परहिते मोक्षकारणभूते ध्यानभावनापर्याये ध्येयो भवति । न च ध्यानभावनापर्यायरूपः । यदि पुनरेकान्तेन द्रव्यार्थिकनयेनापि स एव मोक्षकारणभूतो ध्यान-

---

नहीं प्राप्त हुए जीवके माननेमें मुच् धातुका जो छूटने रूप अर्थ है वह व्यर्थ होता है ॥ भावार्थः—जैसे कोई पुरुष पहले बंधा हुआ हो और फिर छूटै तब वह मुक्त कहलाता है । इसी प्रकार जो जीव पहले कर्मोंसे बंधा हुआ होता है उसीका मोक्ष होता है । और यह बन्ध शुद्ध निश्चयनयकी अपेक्षासे नहीं है । तथा बंधपूर्वक मोक्ष भी शुद्ध-निश्चयनयसे नहीं है । और यदि शुद्ध निश्चयनयसे बंध होवे तो सदा ही इस आत्माके बन्ध रहे मोक्ष होवे ही नहीं । जैसे शृङ्खला ( सांकल व जंजीर ) से बंधे हुए पुरुषके, बन्धके नाशका कारणभूत जो भावमोक्ष है उसके स्थानवाला जो शृंखलाके बन्धको छेदनेका कारणभूत पौरुष ( उद्यम ) है वह पुरुषका स्वरूप नहीं है । और इसी प्रकार द्रव्यमोक्षके स्थानमें प्राप्त ( एवजमें आया हुआ ) जो शृंखला और पुरुष इन दोनोंका जुदा करना है वह भी पुरुषका स्वरूप नहीं है; किंतु उन पौरुष और पृथक्करणसे जुदा जो देखा हुआ हस्त पाद आदि रूप आकार है, वही पुरुषका स्वरूप है । उसी प्रकार शुद्धोपयोगलक्षण जो भावमोक्षका स्वरूप है, वह शुद्ध निश्चयनयकी अपेक्षा जीवका स्वरूप नहीं है । और उसी प्रकार उस भावमोक्षसे साध्य जो जीव और कर्मके प्रदेशोंको जुदा करने रूप द्रव्यमोक्षका स्वरूप है, वह भी जीवका स्वभाव नहीं है । किन्तु उन भावमोक्ष और द्रव्यमोक्षसे भिन्न जो फलभूत ज्ञान आदि गुणरूप स्वभाव है वही, शुद्ध जीवका स्वरूप है । यहां पर भावार्थ यह है कि, जैसे विवक्षित-एकदेश शुद्धनिश्चयनयसे पहले मोक्षमार्गका व्याख्यान किया है; उसीप्रकार पर्यायमोक्षरूप जो मोक्ष है उसका कथन भी विवक्षित एकदेश शुद्धनिश्चयनयसे ही जानना चाहिये । और शुद्धनिश्चयनयसे नहीं । और जो शुद्ध द्रव्यकी शक्तिरूप शुद्ध पारिणामिक परमभावरूप लक्षणका धारक परमनि-

भावना पर्यायो भण्यते तर्हि द्रव्यपर्यायरूपधर्मद्वयाधारभूतस्य जीवधर्मिणो मोक्षपर्याये जाते सति, यथा ध्यानभावनापर्यायरूपेण विनाशो भवति, तथा ध्येयभूतस्य जीवस्य शुद्धपारिणामिकलक्षणभावद्रव्यरूपेणापि विनाशः प्राप्नोति। न च द्रव्यरूपेण विनाशोऽस्ति। ततः स्थितं शुद्धपारिणामिकभावेन बन्धमोक्षौ न भवत इति।

अथात्मशब्दार्थः कथ्यते। अतधातुः सातत्यगमनेऽर्थे वर्त्तते। गमनशब्देनात्र ज्ञानं भण्यते 'सर्वे गत्यर्था ज्ञानार्था इति वचनात्'। तेन कारणेन यथासंभवं ज्ञानसुखादिगुणेषु आसमन्तात् अतति वर्त्तते यः स आत्मा भण्यते। अथवा शुभाशुभमनोवचनकायव्यापारैर्यथासम्भवं तीव्रमन्दादिरूपेण आसमन्तादतति वर्त्तते यः स आत्मा। अथवा उत्पादव्ययध्रौव्यैरासमन्तादतति वर्त्तते यः स आत्मा। किञ्च—यथैकोऽपि चन्द्रमा नानाजलघटेषु दृश्यते तथैकोऽपि जीवो नानाशरीरेषु तिष्ठतीति वदन्ति तच्चु न घटते। कस्मादिति चेत्—चन्द्रकिरणोपाधिवशेन घटस्थजलपुद्गला एव नानाचन्द्राकारेण परि-

---

श्चयमोक्ष है वह तो जीवमें पहले ही विद्यमान है। वह परमनिश्चयमोक्ष जीवमें अब होगा ऐसा नहीं है। तथा राग आदि विकल्पोंसे रहित मोक्षका कारणभूत जो ध्यान-भावनापर्याय है उसमें वही मोक्ष ध्येय होता है। और ध्यान भावनापर्यायरूप ध्येय नहीं है। और यदि एकान्त करके द्रव्यार्थिकनयसे भी वही मोक्षकारणभूत ध्यानभावना पर्याय कहा जावे तो, द्रव्य और पर्यायरूप दो दो धर्मोंका आधार जो जीवधर्मी है, उसके मोक्षपर्याय प्रकट होने पर जैसे ध्यानभावनापर्यायरूपसे विनाश होता है, उसी प्रकार ध्येयभूत जो जीव है उसका शुद्धपारिणामिकलक्षणभावद्रव्यरूपसे भी विनाश प्राप्त होता है। और द्रव्यरूपसे विनाश है नहीं। इस कारण शुद्धपारिणामिकभावसे जीवके बन्ध और मोक्ष नहीं होता है; यह कथन सिद्ध होगया।

अब आत्मा शब्दका अर्थ कहते हैं। अत धातु निरन्तर गमन करने रूप अर्थमें वर्त्तता है और 'सब गमनरूप अर्थके धारक धातु ज्ञान अर्थके धारक हैं' इस वचनसे यहां पर गमन शब्द करके ज्ञान कहा जाता है। इस कारण जो यथासंभव ज्ञान सुख आदि गुणोंमें पूर्णरूपसे वर्त्तता है वह आत्मा है। अथवा शुभ-अशुभ रूप जो मन वचन कायके व्यापार हैं उनकरके यथासंभव तीव्र मन्द आदि रूपसे जो पूर्ण रूपसे वर्त्तता है वह आत्मा कहलाता है। अथवा उत्पाद, व्यय और ध्रौव्य इन तीनोंकरके जो पूर्णरूपसे वर्त्तता है उसको आत्मा कहते हैं। और कितने ही ऐसा कहते हैं कि, जैसे एक ही चंद्रमा अनेक जलके भरे घटोंमें देखा जाता है इसी प्रकार एक ही जीव अनेक शरीरोंमें रहता है सो यह उनका कथन घटता नहीं। क्यों नहीं घटता? ऐसा पूछो तो उत्तर यह है कि जलके घटों में चन्द्रमाको किरणरूप उपाधिके वशसे घटमें विद्यमान जो जलके पुद्गल हैं वे ही अनेक प्रकारके चंद्रमारूप आकारोंमें परिणत हुए हैं

णता, नचैकश्चन्द्रः। तत्र दृष्टान्तमाह—यथा देवदत्तमुखोपाधिवशेन नानादर्पणस्थपुद्गला एव नानामुखाकारेण परिणता, न चैकं देवदत्तमुखं नानारूपेण परिणतम्। परिणमतीति चेत्—तर्हि दर्पणस्थप्रतिबिम्बं चैतन्यं प्राप्नोतीति। न च तथा। किन्तु यद्येक एव जीवो भवति, तदैकजीवस्य सुखदुःखजीवितमरणादिके प्राप्ते तस्मिन्नेव क्षणे सर्वेषां जीवितमरणादिकं प्राप्नोति न च तथा दृश्यते।

अथवा ये वदन्ति यथैकोऽपि समुद्रः क्वापि क्षारजलः क्वापि मिष्टजलस्तथैकोऽपि जीवः सर्वदेहेषु तिष्ठतीति। तदपि न घटते। कथमिति चेत्—जलराश्यपेक्षया तत्रैकत्वं, न च जलपुद्गलापेक्षया तत्रैकत्वम्। यदि जलपुद्गलापेक्षया भवत्येकत्वं तर्हि स्तोकजले गृहीते शेषजलं सहैव किन्नायाति। ततः स्थितं षोडशवर्णिकासुवर्णराशिवदनन्तज्ञानादिलक्षणं प्रत्येकं जीवराशिं प्रति न चैकजीवापेक्षयेति। अध्यात्मशब्दस्यार्थः कथ्यते। मिथ्यात्वरागादिसमस्तविकल्पजालरूपपरिहारेण स्वशुद्धात्मन्यधि यदनुष्ठानन्तदध्यात्ममिति। एवं ध्यानसामग्रीव्याख्यानोपसंहाररूपेण गाथा गता ॥ ५७ ॥

---

और एक चन्द्रमा जो है वह अनेकरूप नहीं परिणमा है। इस विषयमें दृष्टान्त कहते हैं कि जैसे-देवदत्तके मुखरूप उपाधिके वशसे अनेक दर्पणोंमें स्थित जो पुद्गल हैं वे ही अनेकमुखरूप परिणमते हैं और एक देवदत्तका मुख अनेकरूप नहीं परिणमता है। यदि कहो कि, देवदत्तका मुख ही अनेक मुखरूप परिणमता है तो दर्पणस्थित जो देवदत्तके मुखका प्रतिबिम्ब है वह चेतनताको प्राप्त होवै; परंतु ऐसा नहीं अर्थात् दर्पणमें जो मुखका प्रतिबिंब है वह चेतन नहीं है। और भी विशेष यह है कि यदि अनेक शरीरोंमें एक ही जीव हो तो जब एक जीवको सुख, दुःख जीवित और मरण आदि प्राप्त होवें तब उसी क्षणमें सब जीवोंको सुख, दुःख, जीवित और मरण आदि प्राप्त होवें और ऐसा देखनेमें नहीं आता है।

अथवा जो ऐसा कहते हैं कि, 'जैसे एक ही समुद्र कहीं तो खारे जलवाला है, कहीं मीठे जलका धारक है, उसी प्रकार एक ही जीव सब देहोंमें विद्यमान है' सो यह कहना भी घटित नहीं होता। क्यों नहीं घटता यह पूछो तो उत्तर यह है कि, समुद्रमें जलराशिकी अपेक्षासे एकता है और जलके पुद्गलोंकी अपेक्षासे एकता नहीं है। यदि जलपुद्गलोंकी अपेक्षासे एकता होती है तो समुद्रमेंसे अल्प ( थोड़ा, ) जल ग्रहण करनेपर शेष ( बचा हुआ ) जो जल है वह भी साथ ही क्यों नहीं आ जाता है। इसकारण सोलह वानीके सुवर्णकी राशिके समान अनन्तज्ञान आदि लक्षणोंके प्रति जीवराशिमें एकता है और एक जीवकी अपेक्षासे जीवराशिमें एकता नहीं है। अब अध्यात्म शब्दका अर्थ कहते हैं। मिथ्यात्व, राग आदि जो समस्त विकल्पोंके समूह हैं उनका त्याग करके जो निज शुद्ध आत्मामें अनुष्ठान ( प्रवृत्तिका करना ) है उसको अध्यात्म कहते हैं। इसप्रकार ध्यानकी सामग्रीके व्याख्यानके उपसंहाररूपसे यह गाथा समाप्त हुई ॥ ५७ ॥

अथौद्धत्यपरिहारं कथयति:—

दव्वसंगहमिणं मुणिणाहा दोससंचयचुदा सुदपुण्णा।
सोधयंतु तणुसुत्तधरेण णेमिचन्दमुणिणा भणियं जं॥ ५८॥

व्याख्या। "सोधयंतु" शुद्धं कुर्वन्तु। के कर्त्तारः? "मुणिणाहा" मुनिनाथा मुनिप्रधानाः। किंविशिष्टाः? "दोससंचयचुदा" निर्दोषपरमात्मनो विलक्षणा ये रागादिदोषास्तथैव च निर्दोषपरमात्मादितत्त्वपरिज्ञानविषये संशयविमोहविभ्रमास्तैश्च्युता रहिता दोषसंचयच्युताः। पुनरपि कथम्भूताः? "सुदपुण्णा" वर्त्तमानपरमागमाभिधानद्रव्यश्रुतेन तथैव तदाधारोत्पन्ननिर्विकारस्वसम्वेदनज्ञानरूपभावश्रुतेन च पूर्णाः समग्राः श्रुतपूर्णाः। कं शोधयन्तु? "दव्वसंगहमिणं" शुद्धबुद्धैकस्वभावपरमात्मादिद्रव्याणां संग्रहो द्रव्यसंग्रहस्तं द्रव्यसंग्रहाभिधानं ग्रन्थमिमं प्रत्यक्षीभूतम्। किं विशिष्टं? "भणियं जं" भणितः प्रतिपादितो यो ग्रन्थः। केन कर्तृभूतेन? "णेमिचंदमुणिणा" श्रीनेमिचन्द्रसिद्धान्तिदेवाभिधानेन मुनिना सम्यग्दर्शनादिनिश्चयव्यवहाररूपपञ्चाचारोपेताचार्येण। कथम्भूतेन? "तणुसुत्तधरेण" तनुश्रुतधरेण, तनुश्रुतं स्तोकं श्रुतं तद्धरतीति तनुश्रुतधरस्तेन। इति क्रिया-

---

अब ग्रंथकार अपने औद्धत्य (अभिमान) को दूर करनेके लिये अग्रिम छन्द कहकर शास्त्रको समाप्त करते हैं:—

काव्यभावार्थ—अल्पज्ञानके धारक मुझ (नेमिचन्द्र मुनि) ने जो यह द्रव्यसंग्रह कहा है इसको दोषोंसे रहित और ज्ञानसे परिपूर्ण ऐसे आचार्य शुद्ध करें॥ ५८॥

॥ इति श्रीनेमिचन्द्रसिद्धान्तिदेवविनिर्मितो बृहद्द्रव्यसंग्रहः समाप्तः॥

व्याख्यार्थः—"सोधयंतु" शुद्ध करें। शुद्ध करनेवाले कौन हैं? "मुणिणाहा" मुनियोंमें प्रधान अर्थात् आचार्य हैं। कैसे हैं वे आचार्य? "दोससंचयचुदा" दोषरहित परमात्मासे भिन्न लक्षणके धारक जो राग आदि दोष हैं उनके, तथा निर्दोष परमात्मा आदि तत्त्वोंके जाननेमें जो संशय, विमोह और विभ्रमरूप दोष हैं उनके संचयसे रहित हैं। फिर कैसे हैं? "सुदपुण्णा" इस समय विद्यमान परमागम (शास्त्र) नामक जो द्रव्यश्रुत है उससे तथा उस परमागमके आधारसे उत्पन्न जो निर्विकार-निज आत्माके जाननेरूप भावश्रुत है उससे परिपूर्ण हैं। वे आचार्य किसको शुद्ध करें? "दव्वसंगहमिणं" शुद्ध-बुद्ध एकस्वभावका धारक जो परमात्मा है उसको आदि ले जो पुद्गल, धर्म, अधर्म, आकाश और कालरूप ६ द्रव्य हैं उनका है संग्रह जिसमें ऐसे इस प्रत्यक्षमें विद्यमान द्रव्यसंग्रह नामक शास्त्रको शुद्ध करें। कैसे द्रव्यसंग्रहको शुद्ध करें? "भणियं जं" जिस शास्त्र को कहा है। किन कर्त्ताने कहा है? "णेमिचंदमुणिणा" श्रीनेमिचन्द्र सिद्धान्तिदेव नामक मुनिने अर्थात् सम्यग्दर्शन आदि जो निश्चय और व्यवहार भेदसे पांच प्रकारका आचार है उस आचारसहित आचार्यने। कैसे नेमिचन्द्र आचार्यने? "तणुसुत्तधरेण" अल्पश्रुतज्ञानके धारकने। इसप्रकार क्रिया और कारकोंका संबन्ध है।

कारकसम्बन्धः। एवं ध्यानोपसंहारगाथात्रयेण, औद्धत्यपरिहारार्थं प्राकृतवृत्तेन च द्वितीयान्तराधिकारे तृतीयं स्थलं गतम् ॥ ५८ ॥

इत्यन्तराधिकारद्वयेन विंशतिगाथाभिर्मोक्षमार्गप्रतिपादकनामा तृतीयोऽधिकारः समाप्तः।

अत्र ग्रन्थे 'विवक्षितस्य सन्धिर्भवति' इति वचनात्पदानां सन्धिनियमो नास्ति। वाक्यानि च स्तोकस्तोकानि कृतानि सुखबोधनार्थम्। तथैव लिङ्गवचनक्रियाकारकसम्बन्धसमासविशेषणवाक्यसमाप्त्यादिदूषणं तथा च शुद्धात्मादितत्त्वप्रतिपादनविषये विस्मृतिदूषणं च विद्वद्भिर्न ग्राह्यमिति।

एवं पूर्वोक्तप्रकारेण "जीवमजीवं दव्वं" इत्यादिसप्तविंशतिगाथाभिः षट्द्रव्यपञ्चास्तिकायप्रतिपादकनामा प्रथमोऽधिकारः। तदनन्तरं "आसवबन्धण" इत्येकादशगाथाभिः सप्ततत्त्वनवपदार्थप्रतिपादकनामा द्वितीयोऽधिकारः। ततः परं "सम्मदंसण" इत्यादिविंशतिगाथाभिर्मोक्षमार्गप्रतिपादकनामा तृतीयोऽधिकारः ॥ ३ ॥

इत्यधिकारत्रयेनाष्टाधिकपञ्चाशत्सूत्रैः श्रीनेमिचन्द्रसिद्धान्तिदेवैर्विरचितस्य द्रव्यसंग्रहाभिधानग्रन्थस्य सम्बन्धिनी श्रीब्रह्मदेवकृतवृत्तिः समाप्ता ॥

---

इस प्रकार ध्यानके उपसंहाररूप तीन गाथाओंसे तथा औद्धत्यके परिहारकेलिये एक प्राकृत छन्दसे द्वितीय अन्तराधिकारमें तृतीय स्थल समाप्त हुआ ॥ ५८ ॥

ऐसे दो अन्तराधिकारोंद्वारा बीस गाथाओंसे मोक्षमार्गप्रतिपादकनामा तृतीयअधिकार समाप्त हुआ ॥ ३ ॥

इस ग्रन्थमें 'वक्ताको जहां संधि करनेकी इच्छा हो वहां संधि होती है' इस नियमके अनुसार पदोंकी संधिका नियम नहीं है अर्थात् किसी स्थलमें संधि की गई है और किसी स्थलमें नहीं। और मन्दबुद्धियोंको सुखसे बोध होनेके लिये वाक्य भी छोटे छोटे दिये गये हैं। तथा लिंग, वचन, क्रिया, कारक, सम्बन्ध, समास, विशेषण और वाक्यसमाप्ति आदि दूषण और शुद्ध आत्मा आदि तत्त्वोंके प्रतिपादनमें विस्मृति ( भूलना ) आदि रूप जो दूषण इस ग्रन्थमें होवें उनको ज्ञानी पुरुष ग्रहण न करें।

ऐसे पूर्वोक्त प्रकारसे "जीवमजीवं दव्वं" इस गाथाको आदि ले २७ गाथाओंसे षट्द्रव्यपंचास्तिकायप्रतिपादकनामा प्रथम अधिकार है। इसके पश्चात् "आसववंधण" इत्यादि एकादश ११ गाथाओंसे सप्ततत्त्वनवपदार्थप्रतिपादकनामा दूसरा अधिकार है। उसके अनन्तर "सम्मद्दंसण" आदि बीस गाथाओंद्वारा मोक्षमार्गप्रतिपादकनामा तीसरा अधिकार है।

इति श्रीनेमिचन्द्रसिद्धान्तिदेवविरचितबृहद्द्रव्यसंग्रहस्य संस्कृतटीकायाः पं० श्रीजवाहरलालशास्त्रिविरचितो हिंदीभाषानुवादः समाप्तः।

* समाप्तोऽयं ग्रन्थः *

